श्रीः ।

श्रीमत्कविराजजयदेवपंडितकृतं

# श्रीगीतगोविन्दकाव्यम्

तथा

## राधाविनोदाख्यकाव्यंच ।

श्रीविद्वद्रत्नारायणप्रणीतटीकासहितम्

बेरीनिवासिपंडितवस्तिरामकृतभाषाटीकासहितम्

इदं च

भगीरथात्मजेन हरिप्रसादशर्मणा

मुंबय्यां

" जगदीश्वरा " ख्यमुद्रणयंत्रालये मुद्रयित्वा प्राकाश्यं नीतम् ।

वैक्रमाब्दाः १९६० ।

# भूमिका.

सब महाशयोंको मालूम होवे कि यह गीतगोविन्द भाषाटीका हमने बड़े परिश्रमसे बेरीनिवासी पंडित बस्तीरामशास्त्रीसे सकल रसिक जनोंके वास्ते बनवाया है इसके मूलके श्लोकोंपर अन्वयके अंकभी लगवाये गये हैं. उन अंकोंके ही अनुसार नीचे भाषाटीका लिखीगई है तिससे विद्वानोंको यह भी मालूम होगा कि अमुका पदका यह अर्थ है हमने जो यह अंक लगवाया है तथा पदोंकी विभक्तियों और समासोंके ही अनुसार अर्थ लिखनेका परिश्रम किया है. इससे विचारनेवाले महाशयोंको संस्कृतके पदोंकाभी बोध होवेगा. इस ग्रंथमें कहीं दृष्टिभ्रमसे दोषभी रहगया हो उसे विद्वज्जन क्षमा करैंगे. शुभम्भूयात्.

हरिप्रसाद भगीरथजी.

**यह पुस्तक नीचे लिखेहुए स्थानोंपरसे मिलेगा.**

**हरिप्रसाद भगीरथजीका पुस्तकालय,**

**कालकादेवीरोड़ मुंबई.**

**हनुमानदास ब्रजवल्लभदासजीका पुस्तकालय,**

**चौक, कानपूर.**

# गागरमें सागर.

अर्थात्

## श्रीलघुशिवपुराण-भाषाटीका.

इस ग्रंथके रचयिता महात्मा श्रीवेदव्यासजीने अपनी "लघ्वी गुर्वर्थ-गव्हरा" अर्थात् अल्पाक्षरा अर्थबहुला वाणीके असाधारण वैदग्ध्यसे इस छोटेसे ग्रंथमें चतुर्विंशति सहस्र संख्यात्मक "महाशिवपुराण" के समस्त विषयोंका समष्टिरूपसे निरूपण करके "गागरमें सागर" के दृश्यका पूर्ण परिचय दिया है. यद्यपि उसका यावत् विवरण लिखनेके लिये हमारी लेखनी सर्वथा असमर्थ है. तथापि दृष्टिगोचर होनेपर अनुभवी महाशय स्वयं अनुभव कर लेंगे. किंतु संस्कृत मूलमात्र होनेके कारण सर्वसाधारणको इसके लाभसे वंचित रहना पडता था. अतएव संसारतापसंतप्त सर्व जनसमूहको इस वसुधातलवर्ति सुधासागरकी सुगमतया संप्राप्ति होनेके लिये सुमेरपुरनिवासी श्रीपंडित मथुराप्रसादशर्माने इसपर सुजन मनोरंजनी टीकाकी लावण्यमयी रचना कर सरलसोपानमार्गके मनोहर दृश्यको यथावत् प्रस्तुत किया है. इस प्रकारकी परमोपयुक्त भाषाटीकायुक्त इसपुस्तकको हमने सुमेरपुरनिवासी शास्त्री रघुवंशशर्मासे समूल शोधन करके सुपुष्ट सचिक्कण कागजपर सुवाच्य सीसकाक्षरोंमें छापकर विक्रयार्थ प्रस्तुत किया है. परंतु हम अपनेको कृतकार्य तभी मानेंगे, जब कि हमारे अनुग्राहक ग्राहकगण इसको ग्रहणकर इसके अवलोकनद्वारा ऐहिक व आमुष्मिक सुखोंका सम्यक्तया सम्पादन करेंगे. यद्यपि ऐसे अमूल्य ग्रंथका मूल्य जो कुछ हो, किन्तु थोडाही है. तथापि धनी निर्धनी सबहीको इसका अनुपम लाभ होनेके लिये बहुत कम अर्थात् केवल २ रु० ट. ख. ६ आना रक्खा है.

**पुस्तक मिलनेका ठिकाना.**

**हरिप्रसाद भगीरथजीका.**

पुस्तकालय-कालकादेवीरोड, रामवाडी, मुम्बई.

श्रीः ।

# अथ गीतगोविन्दम्

## टीकासमेतम् ।

### प्रथमः सर्गः

श्रीराधाकृष्णाभ्यां नमः ॥

भद्राय भवतां भूयात्कृष्णः सद्भक्तिभावितः ॥
कालिंदीजलसंसर्गमेघश्यामोतिसुंदरः ॥ १ ॥

इह कविः प्रारिप्सितस्य निर्विघ्नपरिसमाप्त्यर्थं कृष्णस्मरणरूपवस्तुनिर्देशलक्षणं मंगलाचरणं तावदाचरति—

श्लोकः ॥ मेघैर्मेदुरमंबरं वनभुवःश्यामास्तमालद्रुमैर्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ॥ इत्थं नंदनिदेशतश्चलितयोः प्रत्यध्वकुंजद्रुमं राधामाधवयोर्जयंति यमुनाकूले रहःकेलयः ॥ १ ॥

सं॰ टी॰—मेघैरिति । राधामाधवयोः रहःकेलयः यमुनाकूले जयंतीत्यन्वयः । राधाकृष्णयोः रहःकेलयः एकांतक्रीडाः यमुनाकूले यमुनातीरे जयंति सर्वोत्कर्षेण वर्तंते । कथंभूतयोः राधामाधवयोः प्रत्यध्वकुंजद्रुमं अध्वनि मार्गे कुंजे लतागृहे द्रुमे वृक्षे च इत्थं इति नंदनिदेशतः नंदाज्ञया चालितयोः । अथवा अध्वकुंजद्रुमान्प्रति उद्दिश्य चालितयोः । इति किं हेराधे अंबरं आकाशं मेघैर्मेदुरं व्याप्तमित्यर्थः । वनभुवः तमालद्रुमैर्वृक्षैः श्यामाः अयं कृष्णः नक्तं रात्रौ भीरुः भयशीलः अतिबालत्वात् तस्मादिमं पुरोवर्तिनं कृष्णं गृहं प्रापय एवंकरणं नंदस्यान्यस्मिन् विश्वासाभावात् ॥ १ ॥

श्रीगणेशाय नमः ॥

प्रभव्याय स नो भूयात् कृष्णस्सद्भावभावितः ॥
राधिकाचित्तहरणः शरणः शरणार्तिहा ॥ १ ॥
वस्तिरामबुधेनापि बदरीपुरवासिना ॥
गीतगोविन्दटीकेयं रच्यते रसिकप्रिया ॥ २ ॥

भा० टी०–राधाकृष्णकी एकांतमें प्रवर्त्तहुई क्रीड़ा यमुनाजीके तटपर संपूर्ण उत्कर्ष (आनंद) से वर्त्तती हैं। कैसे राधाकृष्ण हैं कि, मार्गे, लतास्थान (कुंज), वृक्ष, इन्होंके प्रति ऐसी नंदजीकी आज्ञासे चलेहुए हैं कि, हे राधे! मेघोंसे, आकाश व्याप्त होरहाहै. वनकी भूमी तमालवृक्षोंकरके काली होरही हैं. और यह कृष्ण, रात्रीमें डरपोक है. इसलिये इसको तुम ही घरको प्राप्त करो (लेजावो) ॥ १ ॥

इदानीं कविःसरस्वतीलक्ष्म्योः कीर्तनपूर्वकं कृष्णस्य सुरतक्रीडावर्णनं कर्तुमाह वसंततिलकावृत्तेन–

**श्लोकः ॥ वाग्देवताचरितचित्रितचित्तसद्मा पद्मावतीचरणचारणचक्रवर्ती ॥ श्रीवासुदेवरतिकेलिकथासमेतमेतं करोति जयदेवकविः प्रबंधम् ॥ २ ॥**

सं० टी०—वाग्देवतेति । जयदेवकविः एतं प्रबंधं कृष्णकेलिकथाप्रतिपादकग्रंथंकरोतीत्यन्वयः । कथंभूतो जयदेवकविः वाग्देवताचरितचित्रितचित्तसद्मा वाग्देवतायाः सरस्वत्याश्चरितेन वचनरचनाचारविशेषेण चित्रितं मंडितं चित्तसद्म मनोगृहं यस्य सः । पुनःकथंभूतः पद्मावत्याः लक्ष्म्याश्चरणचारणेन संवाहनेन चक्रवर्ती नृप इव लक्ष्मीसेवया चक्रवर्तित्वं प्राप्त इति । कथंभूतं प्रबंधं श्री वासुदेवेति श्रीरूपिणी राधा वासुदेवः श्रीकृष्णश्च तयोः रतिकेलिकथया सुरतक्रीडाकथनेन समेतं युक्तम् ॥ २ ॥

भा० टी०–सरस्वतीके चरित्रोंसे मंडित, (आभूषित,) हो रहाहै मनरूप घर जिसका और लक्ष्मीजीके चरणोंकी सेवा करनेसे चक्रवर्तीपनेको प्राप्तहुआ. ऐसा जयदेवकवि राधाकृष्णके रमणक्रीड़ाकी कथासे संयुक्त इस ग्रंथको करताहै ॥ २ ॥

अथ कविर्निजग्रंथप्रयोजनमाह द्रुतविलंबितेन वृत्तेन–

**श्लोकः ॥ यदि हरिस्मरणे सरसं मनो यदि विलासकलासु**

कुतूहलम् ॥ मधुरकोमलकांतपदावलिं शृणु तदा जयदेवसरस्वतीम् ॥ ३ ॥

सं० टी०—यदीति । हे कृष्णभक्त ! तदा तर्हि जयदेवसरस्वतीं शृणु इत्यन्वयः । यदि यर्हि हरिस्मरणे कृष्णाचिंतने सरसं सानुरागं तव मनः । अस्तीत्यध्याहारः । यदि यर्हि विलासकलासु विलासः श्रीकृष्णविलासः कलाश्चतुःषष्टिस्तासु कुतूहलमस्तीति । कथंभूतां जयदेवसरस्वतीं मधुरा सरसा अर्थतः कोमला शब्दतः अतएव कांता मनोहरा पदावलिः पदसमूहो यस्यां सा ताम् ॥ ३ ॥

भा० टी०—जो यदि विष्णुभगवान्के स्मरणमें रसिक मन है, और जो यदि ( श्रीकृष्णके ) विलास तथा कलाओंमें आश्चर्य है तो मधुर और कोमल अतएव मनोहर पदसमूहोंवाली जयदेवकी वाणीको सुनो ॥ ३ ॥

कविरन्यग्रंथेभ्यो मद्ग्रंथे बहवो गुणाः संतीति द्योतयन् शार्दूलविक्रीडितेनाह—

श्लोकः ॥ वाचः पल्लवयत्युमापतिधरः संदर्भशुद्धिं गिरां जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः ॥ शृंगारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धनस्पर्द्धी कोऽपि न विश्रुतः श्रुतिधरो धोईकविक्ष्मापतिः ॥ ४ ॥

सं० टी०—वाचइति । उमापतिधरो नाम कविर्वाचः वचनानि पल्लवयति विस्तारयति नतु गुणान् । गिरां संदर्भशुद्धितः शब्दतश्च ग्रन्थनविशुद्धिं जयदेव एव परं जानीते नान्य इत्यर्थः । शरणो नाम कविः दुरूहद्रुतेः विषमग्रंथस्य शीघ्रोच्चारतः श्लाघ्यः स्तुत्यः । शृंगारेति शृंगारोत्तराणि शृंगारप्रधानानि संति उत्कृष्टानि प्रमेयानि वा वचनानि तेषां रचनैः प्रबंधैः आचार्यगोवर्धनस्पर्धी कोपि न विश्रुतः आचार्यगोवर्धनः कविः शृंगारप्रधानमेव प्रबंधं करोतीत्यर्थः । धोईनामा कविक्ष्मापतिः कविराजः श्रुतिधरः श्रुत्या श्रवणमात्रेणैव धारयति न पुनरर्थादिग्रहणे प्रवीणः इति राजपदेन महाहंकारकथनम् ॥ ४ ॥

भा० टी०—उमापतिधर नाम कवि वचनोंका विस्तार करता है. शरणकवि कठिन ग्रंथको शीघ्रही कहनेंसे सराहनें लायकहै शृंगारप्रधानवाले उत्तम उपमावाले वचनोंकरके गोवर्धन आचार्यसे बराबरी करनेवाला कोईभी प्रसिद्ध नहीं है. धोई नामवाला कविराज सुननेंसेही धारण कर लेता है परंतु, अच्छेप्रकार शब्द गूंथनेंकी शुद्धिवाली वाणीको जयदेव ही जानताहै ॥ ४ ॥

कविरधुना भक्तानुग्रहार्थं विघ्नाभावार्थं च दशावतारवर्णनमाह—

अथ प्रथमप्रबंधो मालवरागेण रूपकताले गीयते.

**प्रलयपयोधिजले धृतवानसि वेदम् ॥ विहितवहित्रचरित्रमखेदम् ॥ केशव धृतमीनशरीर जय जगदीश हरे ॥ १ ॥**

सं० टी०—प्रलयेत्यादिजगदीशइत्यंतं अस्य गीतस्य मालवरागः रूपकतालः । तल्लक्षणं “ नितंबिनीचुंबितवक्रपद्मः शुकद्युतिः कुंडलवान्किरीटी । संगीतशालां प्रविशन्प्रदोषे मालाधरो मालवरागराजः ” “ रूपके स्यात् द्रुतं लघुरिति ” । हे केशव ! धृतं मीनस्य शरीरं वेदोद्धरणार्थं येन सः । हे जगदीश ! हे हरे ! जय उत्कर्षेण वर्द्धस्व । कस्मादित्यत आह त्वं प्रलयपयोधिजले कल्पांतसमुद्रजले निमग्नं वेदं धृतवानसि । कथं अखेदं अपरिश्रमं यथा भवति तथा । पुनःविहितेति विहितं कृतं वहित्रचरित्रं समुद्रतरणकारणनौकाचेष्टितं यत्र क्रियायाम् ॥ १ ॥

अब प्रथम प्रबंध मालवरागसे रूपकतालमें गाया जाताहै.

भा० टी०—मच्छका शरीर धारण करनेवाले ! हे केशव ! हे जगदीश ! हे हरे ! उत्कर्षसे बढो. तुम प्रलयके समुद्रके जलमें यथायोग्य है वाह्यचरित्र जिसमें ऐसा और खेदरहित कर्मसे वेदको धारण करते भयेहो ॥ १ ॥

**क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे ॥ धरणिधरणकिणचक्रगरिष्ठे ॥ केशव धृतकच्छपरूप जय जगदीश हरे ॥ २ ॥**

सं० टी०—क्षितिरिति । हे केशव ! धृतं कच्छपस्य रूपं येन स तत्संबोधनं हे जगदीश ! हे हरे ! जय पूर्ववत् । तव पृष्ठे क्षितिः पृथ्वी तिष्ठतीत्यन्वयः । कथंभूते पृष्ठे अतिविपुलतरे अतिक्रांतः विपुलतरः पदार्थो येन । पुनः कथंभूते धराण्याः क्ष्मायाः धरणेन वहनेन यत् किणचक्रं मृत्पिंडस्थानं गरिष्ठे दृढे ॥ २ ॥

भा० टी०—कछुवाके शरीरको धारणकरनेंवाले! हे केशव! हे जगदीश! हे हरे! उत्कर्षसे बढ़ो. पृथ्वीके धारणकरनेंमे लिप्तहुई मृत्तिकासे दृढहुई अत्यंतबड़ीभारी तुम्हारी पीठपर पृथ्वी ठहरती है ॥ २ ॥

**वसति दशनशिखरे धरणी तव लग्ना ॥ शशिनि कलंककलेव निमग्ना ॥ केशव धृतसूकररूप जय जगदीश हरे ॥ ३ ॥**

सं० टी०—वसतीति । हेकेशवेत्यादिपूर्ववत् धृतं सूकरस्य रूपं येन तव दशनशिखरे दंताग्रभागे धरणी पृथ्वी लग्ना संबद्धा वसति । तत्र दृष्टांतः केव शशिनि चंद्रे निमग्ना अंतःस्थिता कलंककलेव कलंकरेखेव ॥ ३ ॥

भा० टी०—शूकरके शरीरको धारण करनेंवाले! हे केशव! हे जगदीश! हे हरे! उत्कर्षसे बढ़ो; आपके दंताग्र भागमें लगीहुई पृथ्वी मानों चंद्रमाविषे कलंककी रेखा दीखती हो तैसे अंतमें स्थितहुई वसती है ॥ ३ ॥

**तव करकमलवरे नखमद्भुतशृंगम् ॥ दलितहिरण्यकशिपुतनुभृंगम् ॥ केशव धृतनरहरिरूप जय जगदीश हरे ॥ ४ ॥**

सं० टी०—तवेति । हे केशव! धृतं नरहरेः रूपं नरसिंहस्य स्वरूपं येन तत्संबोधनं । तव करकमलवरे हस्तपद्मश्रेष्ठे नखं अस्तीत्यध्याहारः । कथंभूतं नखं अद्भुतशृंगं आश्चर्यकरं शृंगमग्रभागो यस्य। अद्भुतत्वे हेतुमाह दलितः विदारितः हिरण्यकशिपोर्दैत्यस्य तनुरेव भृंगो भ्रमरो येन । अन्यत्र भ्रमरेण कमलाग्रं दल्यते इह तु वैपरीत्येनाश्चर्यम् ॥ ४ ॥

भा० टी०—नृसिंहरूपको धारण करनेंवाले! हे केशव! हे जगदीश! हे हरे! आनंदसे बढ़ो तुम्हारे उत्तम हस्तकमलपर हिरण्यकशिपुके शरीर रूप भ्रमरको फाड़नेंवाला आश्चर्यरूपी नख है ॥ ४ ॥

**छलयसि विक्रमणे बलिमद्भुतवामन ॥ पदनखनीरजनितजनपावन ॥ केशव धृतवामनरूप जय जगदीश हरे ॥ ५ ॥**

सं० टी०—छलयसीति । धृतं वामनस्य रूपं येन हे अद्भुतवामन आश्चर्यहेतुवामन! त्वं विक्रमणे पादविक्षेपे कर्तव्ये बलिं असुरं छलयसि प्रवंचयसि ।

कीदृशस्त्वमिति संबोधनं पदेति पदनखनीरेण पदनखाग्रसंबंधिजलेन गंगा-रूपेण जनितं कृतं जनपावनं लोकपावित्र्यं येन ॥ ५ ॥

भा० टी०–हे आश्चर्यरूपी वामन! अपने चरणके नखसे उत्पन्नहुए गंगाजलसे जगत्को पवित्र करनेवाले! तुम पैरोंके धरनेसे बलिदैत्यको छलते हो· हे केशव! हे वामनरूप धारणकरनेवाले! जगदीश! हे हरे! अत्यंत उत्कर्षसे बढ़ो ॥ ५ ॥

**क्षत्रियरुधिरमये जगदपगतपापम् ॥ स्नपयसि पयसि शमितभवतापम् ॥ केशव धृतभृगुपतिरूप जय जगदीश हरे ॥ ६ ॥**

सं० टी०–क्षत्रियेति । हे धृतभृगुपतिरूप धृतपरशुरामरूप क्षत्रियरुधिरमये पयसि जगत् स्नपयसीत्यन्वयः । क्षत्रियाणां शोणितविकारे जले जगत्स्नापयसि । स्नानेन फलमाह कथंभूतं जगत् अपगतपापं गतकलुषं । पुनःकथंभूतं शमितभवतापं दूरीकृतसंसारतापम् ॥ ६ ॥

भा० टी०–हे परशुरामरूप धारणकरनेवाले! हे केशव! भगवान् तुम पापोंसे रहितहुए तथा संसारके दुःखोंसे दूरहुए जगत्को क्षत्रियोंके रुधिरमय जलमें स्नान कराते हो· हे जगदीश! हे हरे! अत्यंत उत्कर्षसे बढ़ो ॥ ६ ॥

**वितरसि दिक्षु रणे दिक्पतिकमनीयम् ॥ दशमुखमौलिबलिं रमणीयम् ॥ केशव धृतरघुपतिरूप जय जगदीश हरे ॥ ७ ॥**

सं० टी०–वितरसीति । हेधृतरघुपतिरूप धृतरामशरीर! त्वं रणे संग्रामे दशमुखमौलिबलिं रावणमस्तकोपहारं दिक्षु दिशासु वितरसि ददासि । कीदृशं दिक्पतिकमनीयं इंद्रादीनां रमणीयं काम्यं इच्छाविषयमित्यर्थः ॥ ७ ॥

भा० टी०–हे रामचंद्ररूपधारी! भगवन्! तुम युद्धमें दिक्पालोंको मनचाही उत्तम रमणीक रावणके मस्तकोंके बलिको दिशाओंमें देतेहो ( बांटतेहो ) हे केशव! हे जगदीश! हे हरे! आनंदसे बढ़ो ॥ ७ ॥

**वहसि वपुषि विशदे वसनं जलदाभम् ॥ हलहतिभीतिमिलितयमुनाभम् ॥ केशव धृतहलधररूप जय जगदीश हरे ॥ ८ ॥**

सं० टी०–वहसीति । हेधृतहलधररूप धृतबलभद्ररूप त्वं वपुषि वसनं वस्त्रं वहसि धारयसि। कथंभूते वपुषि विशदे शुभ्रे कथंभूतं वसनं जलदाभं सज-

लमेघसदृशं । पुनःकथंभूतं हलहतिभीत्या लांगलाघातभयेन मिलिता उप-स्थिता या यमुना तद्वत् आभा दीप्तिर्यस्य तत् । भयेनातिश्यामत्वं भवति ॥ ८ ॥

भा० टी०—बलदेवरूपधारी ! हे केशव ! हे जगदीश ! हे हरे ! अत्यंत आनंदसे बढ़ो तुम गौरवर्ण शरीरपँर हलके आघातके भयसे समीप आईहुई काली यमुनाके जलस-रीखे और जलवाले मेघ सरीखे ( श्याम ) वस्त्रको धारण करतेहो ॥ ८ ॥

**निंदसि यज्ञविधेरहह श्रुतिजातं ॥ सदयहृदय दर्शितपशुघा-तम् ॥ केशव धृतबुद्धशरीर जय जगदीश हरे ॥ ९ ॥**

सं०टी०—निंदसीति । हेधृतबुद्धशरीर धृतबुद्धावतार ! हेसदयहृदय दयास-हितांतःकरण जय । ननु वेदनिंदकस्य कथं स्तुतिरित्यतआह त्वं यज्ञविधेः क्रतुविधानसंबंधि श्रुतिजातं वेदवाक्यसमूहं निंदसि दूषयसि न तु सर्वमित्यर्थः । सोपि किमिति निंद्यते इत्यत आह अहह कष्टं दयायां वा दर्शितःबोधितः पशूनां घातो वधो येन तादृशं । वेदोपि पशूनां घातं बोधयतीत्यतः अहो-कष्टमित्येव निंदयसीतिभावः ॥ ९ ॥

भा० टी०—हे बुद्धावतारशरीरधारी ! दयासहित हृदयवाले ! केशव ! भगवान् हे जग-दीश ! हे हरे ! अत्यंत आनंदसे बढ़ो. अहह ! ( कष्टहै ) बड़ीदया है ऐसे विचारिकै (तुम) पशुघातदर्शानेवाले ! यज्ञविधायक वेदकी निंदा करते हो ॥ ९ ॥

**म्लेच्छनिवहनिधने कलयसि करवालं ॥ धूमकेतुमिव किम-पि करालं ॥ केशव धृतकल्किशरीर जय जगदीश हरे ॥ १० ॥**

सं० टी०—म्लेच्छेति । हे धृतकल्किशरीर धृतकल्क्यवतारशरीर तच्चेष्टितमाह त्वं म्लेच्छनिवहनिधने म्लेच्छानां निवहाः समूहास्तेषां निधने नाशनिमित्तं किमपि अनिर्वचनीयं करवालं खड्गं कलयसि धारयासि । कथंभूतं करवालं धूमकेतुमिव औत्पातिकतारकापातमिव करालं भयानकं । अथवा धूमकेतुर-ग्निस्तमिव ॥ १० ॥

भा० टी०–हे कल्किशरीरधारी! भगवन्! तुम म्लेच्छोंके समूहोंका नाश होनेके निमित्त उत्पातदर्शक धूमकेतुतारा केसमान अद्भुत भयानक तलवारको धारण करतेहो इसलिये हे केशव! हे जगदीश! हे हरे! अत्यंत आनंदसे बढो ॥ १० ॥

धृतवानसीत्यादिभिर्वर्तमानप्रयोगैरवताराणां भगवतश्च लीलायाः नित्यत्वं दर्शितं । एवं तत्तदवतारगुणैःस्तुतिं कृत्वा संप्रत्यवतारिणं स्तुवन्प्रार्थयते–

**श्रीजयदेवकवेरिदमुदितमुदारम् ॥ शृणु सुखदं शुभदं भवसारम् ॥**
**केशव धृतदशविधरूप जय जगदीश हरे ॥ ११ ॥**

**इति श्रीगीतगोविंदे प्रथमः प्रबंधः ॥ १ ॥**

सं० टी०–श्रीजयदेवेति । हेधृतदशविधरूप धृतानि दशविधानि रूपाणि येन तत्संबोधनं श्रीजयदेवकवेः इदं गीतं उदितं भाषितं शृणु आकर्णयेति भक्तजनं प्रत्युक्तिः । कीदृशं उदारं मनोहरं सुश्राव्यत्वात् शुभदं कल्याणदायकं भवसारं संसारे धनरूपम् ॥ ११ ॥

भा० टी०–ऐसे दशप्रकारके रूप धारणकरनेंवाले! हे केशव! श्रीजयदेवकविके कहेहुए, इस मनोहर, सुखदायक, मंगलदायक, संसारमें साररूप गीतको सुनो और हे जगदीश! हे हरे! अत्यंत आनंदसे बढो ॥ ११ ॥

इतिश्री गीतगोविन्दस्य रसिकप्रिया नाम भाषाटीकायां प्रथमः प्रबंधः ॥ १ ॥

उक्त नेवावतारान्पुनः संक्षेपेण कीर्तयति–

**श्लोकः ॥ वेदानुद्धरते जगन्ति वहते भूगोलमुद्बिभ्रते दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ॥ पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥ २ ॥**

सं० टी०–वेदानिति । तुभ्यं कृष्णाय नमःअस्तु इत्यन्वयः । कथंभूताय वेदानुद्धरते मीनरूपेण । पुनः कथंभूताय जगन्ति वहते धारयते कूर्मरूपेण । भूगोलं पृथ्वीचक्रं उद्बिभ्रते ऊर्ध्वं धारयते वाराहरूपेण । दैत्यं हिरण्यकशिपुं दारयते नृसिंहरूपेण । बलिं बलिदैत्यं छलयते वंचयते वामनरूपेण । क्षत्रक्षयं क्षत्रियनाशं कुर्वते परशुरामरूपेण । पौलस्त्यं रावणं जयते रामरूपेण ।

हलं लांगलं कलयते धारयते बलभद्ररूपेण । कारुण्यं दयां आतन्वते विस्तारयते बुद्धरूपेण । म्लेच्छान् अंत्यजान् मूर्च्छयते नाशयते कल्किरूपेण । अतएव दशाकृतिकृते दशविधरूपधारिणे ॥ १ ॥

भा० टी०-( मत्स्यरूपसे ) वेदोंका उद्धार करतेहुए, ( कूर्मरूपसे ) जगतोंको धारण करतेहुए ( वाराहरूपसे ) पृथ्वीमंडलको ऊपरको उठातेहुए, ( नृसिंहरूपसे ) हिरण्यकशिपु दैत्यको मारतेहुए, ( वामनरूपसे ) बलिदैत्यको छलतेहुए,( परशुरामरूपसे ) क्षत्रियोंका नाश करतेहुए, ( रामरूपसे ) रावणको जीततेहुए, ( बलरामरूपसे ) हलको धारणकरतेहुए, (बौद्धावतारसे) दयाको बढ़ातेहुए, ( कल्किरूपसे ) म्लेच्छोंको नाशकरतेहुए ऐसे इन कार्योंमें पृथक्पृथक् दश प्रकारके रूपोंको धारण करतेहुए तुम श्रीकृष्ण भगवान्को नमस्कार है ॥ १ ॥

अथ द्वितीय प्रबंधो गुर्जरीरागेण प्रतिमंठताले गीयते ॥

अब दूसरा प्रबंध गुर्जरी रागसे प्रतिमंठतालमें गाया जाता है—

कविरिदानीं गुर्जरीरागेण कृष्णं स्तौति—

**श्रितकमलाकुचमंडल धृतकुंडल ए ॥**
**कलितललितवनमाल जय जय देव हरे ॥ १ ॥**

सं० टी०—श्रितेति । रागलक्षणं “श्यामा सुकेशी मलयद्रुमाणां मृदूल्लसत्पल्लवतल्पयाता । श्रुतेः स्वराणां दधती विभागं तंत्रीमुखा दक्षिणगुर्जरीयं” इति। हे देव हे हरे जयजयस्व भक्तपक्षपाते सर्वोत्कर्षेण वर्धस्व । श्रितेत्यादीनि अष्टपद्याः पदानि संबोधनानि ज्ञातव्यानि । ए इति पदं हे इत्यर्थः । हे श्रितकमलाकुचमंडल श्रितं आश्रितं कमलायाः लक्ष्म्याः कुचमंडलं स्तनमंडलं येन। हे धृतकुंडल धृते कुंडले येन तस्य संबोधनं । कलितेति कलिता धृता ललिता सुंदरा वनमाला पुष्पदाम येन ॥ १ ॥

भा० टी०— हे लक्ष्मीके कुचमंडलोंको स्पर्श करनेवाले! हे कुंडलधारी ! हे सुंदर पुष्पोंकी मालाको धारण करनेवाले! हे देव ! हे हरे! ( भक्तोंकेवास्ते ) अत्यंत हर्षसे बढ़ो; अत्यंत हर्षसे बढ़ो ॥ १ ॥

**दिनमणिमंडलमंडन भवखंडन ए ॥**
**मुनिजनमानसहंस जय जय देव हरे ॥ २ ॥**

सं० टी०—दिनमणीति । हे दिनमणिमंडलमंडन सूर्यमंडलालंकार। हे भवखंडन भक्तानां संसारनाशक। हे मुनिजनमानसहंस मुनिजनानां मानसे हंस इव मानसे सरासि हंसोस्ति तद्वत्। जयजयेति पूर्ववत् ॥ २ ॥

भा० टी०—हे सूरजके मंडलवत् आभूषणवाले! हे जन्ममरणको दूर करनेवाले! हे मुनिजनोंके मनरूपी सरोवरमें हंसरूप! हे देवे! हे हरे (भक्तोंकेवास्ते) अत्यंत हर्षसे बढ़ो बढ़ो ॥ २॥

कालियविषधरगंजन जनरंजन ए ॥
यदुकुलनलिनदिनेश जय जय देवे हरे ॥ ३ ॥

सं० टी०—कालियेति । कालियनाम्नः सर्पस्य गंजन हिंसक। हे जनरंजन। हे यदुकुलनलिनदिनेश यादवकुलकमलसूर्य ॥ ३ ॥

भा० टी०—हे कालीय सर्पको मारनेवाले! हे मनुष्योंको प्रसन्न करनेवाले! हे यादवकुलरूपी कमलके सूर्यरूप! हे देवे! हे हरे! (भक्तोंकेवास्ते) अत्यंत हर्षसे बढ़ो बढ़ो ॥ ३ ॥

मधुमुरनरकविनाशन गरुडासन ए ॥
सुरकुलकेलिनिदान जय जय देवे हरे ॥ ४ ॥

सं० टी०—मधुमुरेति । मधुमुरनरकसंज्ञानां दैत्यानां नाशन । गरुडासन । गरुड एव आसनं यस्य सः। सुरकुलेति सुरकुलानां देवसमूहानां केलेः क्रीडायाः सुखस्येति यावत् निदान आदिकारण ॥ ४ ॥

भा० टी०—हे मधु, मुर, नरकासुर, इन दैत्योंको मारनेवाले! हे गरुड़की सवारी करनेवाले! हे देवतोंके कुलके सुखके आदिकारण! (बीज) हे देवे! हे हरे! (भक्तोंकेवास्ते) अत्यंत हर्षसे बढ़ो बढ़ो॥ ४ ॥

अमलकमलदललोचन भवमोचन ए ॥
त्रिभुवनभवननिधान जय जय देवे हरे ॥ ५ ॥

सं० टी०—अमलेति ।अमलकमलवत् निर्मलपद्मपत्रवत् लोचने यस्य । हे भवमोचन संसारभंजक । त्रिभुवनभवननिधान त्रिभुवनमेव भवनं गृहं तत्र निधानमिव निधिरिव ॥ ५ ॥

भा॰ टी॰—हे निर्मल कमलपत्रके समान नेत्रोंवाले! हे संसारसे छुडानेवाले! हे त्रिभुवनभवननिधान! (त्रिभुवनरूपी घरके स्थान) हे देव! हे हरे! (भक्तोंकेवास्ते) अत्यंत हर्षसे बढ़ो बढ़ो ॥ ५ ॥

**जनकसुताकृतभूषण जितदूषण ए ॥ समरशमितदशकंठ जय जय देव हरे ॥ ६ ॥**

सं॰ टी॰—जनकेति । जनकसुतायाः सीतायाः कृतभूषण कृतालंकार । जितदूषण जितो दूषणनामा राक्षसो येन । समरेति समरे संग्रामे शमितो मारितो दशकंठो रावणो येन ॥ ६ ॥

भा॰टी॰—हे सीताके आभूषण करनेवाले! हे खर दूषण नामवाले राक्षसको जीतनेवाले! हे युद्धमें रावणको मारनेवाले! हे देव! हे हरे! (भक्तोंकेवास्ते) अत्यंत हर्षसे बढ़ो अत्यंत हर्षसे बढो ॥ ६ ॥

**अभिनवजलधरसुंदर धृतमंदर ए ॥**
**श्रीमुखचंद्रचकोर जय जय देव हरे ॥ ७ ॥**

सं॰ टी॰—अभिनवेति । अभिनवजलधरसुंदर हे सजलमेघकांते । धृतमंदर धृतमंदराचल । श्रीमुखचंद्रचकोर लक्ष्मीमुखमेव चंद्रस्तत्र चकोर इव ॥ ७ ॥

भा॰ टी॰—हे सजल मेघसरीखी कांतिवाले! हे मंदराचलके धारणकरनेवाले! हे लक्ष्मीके मुखरूपी चंद्रमापर चकोररूप! हे देव! हे हरे! (भक्तोंकेवास्ते) अत्यंत हर्षसे बढ़ो बढ़ो ॥ ७ ॥

**तव चरणे प्रणता वयमिति भावय ए ॥**
**कुरु कुशलं प्रणतेषु जय जय देव हरे ॥ ८ ॥**

सं॰ टी॰—तवेति । एवंभूत हे हरे जयजयेति । तव चरणे वयं प्रणताः अतीव नम्रा इति भावय जानीहि । प्रणतेषु मादृशेषु कुशलं कल्याणं कुरु ॥ ८ ॥

भा॰ टी॰—(ऐसे प्रकारवाले) हे देव! हे हरे! (तुम) अत्यंत हर्षसे बढ़ो बढ़ो. तुम्हारे चरणमें हम प्रणाम करते हैं. ऐसे जानों और हमारे सदृश नम्रोंमें कल्याण करो ॥ ८ ॥

**श्रीजयदेवकवेरिदं कुरुते मुदम् ॥**
**मंगलमुज्ज्वलगीतम् जय जय देव हरे ॥ ९ ॥**
**इति श्रीगीतगोविंदे द्वितीयप्रबंधः ॥ २ ॥**

सं० टी०—श्रीजयदेवेति । हे देव हे हरे जयजयेति प्रार्थयते श्रीजगदेवकवेः इदं उदितं मंगलं गीताविशेषः मुदं हर्षं कुरुते शृण्वतां भक्तानामितिशेषः । कथं भूतं इदं मंगलं उज्ज्वलं गीतं तदनुगमने रम्यं गीतं गानं यस्मिन् ॥ ९ ॥

भा० टी०–हे देव! हे हरे! (भक्तोंकेवास्ते) अत्यंत हर्षसे बढो, बढो; श्रीजयदेवकविका कहाहुआ यह, उज्ज्वल गीत, मंगल, (सुननेंवाले भक्तोंको) आनंद करताहै ॥९॥
इतिश्रीगीतगोविन्दस्य रसिकप्रिया नाम भाषाटीकायां द्वितीयः प्रबंधः ॥ २ ॥

अधुना कविः कामोद्दीपकत्वात् वसंतस्य व्याजेन कृष्णक्रीडां वक्तुं भक्तान् प्रति आशिषं ब्रूते.

श्लोकः ॥ पद्मापयोधरतटीपरिरंभलग्नकाश्मीरमुद्रितमुरो मधुसूदनस्य ॥ व्यक्तानुरागमिव खेलदनंगखेदस्वेदांबुपूरमनुपूरयतु प्रियं वः ॥ १ ॥

सं० टी०—पद्मेति । मधुसूदनस्य उरो वक्षःस्थलं वः युष्माकं प्रियमभीष्टमनुपूरयतु संपूर्णं करोतु । कथंभूतं मधुसूदनस्य उरः पद्मेति पद्मायाः लक्ष्म्याःपयोधरतटीस्तनपरिसरस्तस्य परिरंभणेन आलिंगनेन लग्नं यत्काश्मीरं कुंकुमं केशरं तेन मुद्रितं चिन्हितं । ममैवेदं वक्षःस्थलं नान्यस्य इतिभावः । पुनःकथंभूतमिव व्यक्तानुरागमिव । पुनःकथंभूतं उरः खेलदिति खेलन् खेलनगतिं कुर्वन् योऽनंगस्तस्य खेदेन सुरतायासेन स्वेदांबुपूरो घर्मजलप्रवाहो यत्र ॥ १ ॥

भा० टी०–लक्ष्मीजीके कुचमंडलों करके मिलाप करनेसे लगी हुई केशरसे चिन्हित हुआ, क्रीड़ाकरतेहुए कामदेवके खेदसे अर्थात् मैथुनकरनेंके परिश्रमसे पसीनाके जलसे पूरित हुआ, प्रकट अनुरागवाला (मानों प्रीति प्रकट हो रही है) ऐसा मधुसूदन भगवान्का हृदय (छाती) तुम्हारे अभीष्टको पूरण करो ॥ १ ॥

अधुना विरहोत्कंठितायाः राधायाः काचित्सखी कृष्णवार्तां वक्तुमाह—

श्लोकः॥वसंते वासंतीकुसुमसुकुमारैरवयवैर्भ्रमंतीं कान्तारे बहुविहितकृष्णानुसरणाम् ॥ अमंदं कंदर्पज्वरजनितचिंताकुलतया चलद्बाधाराधा सरसमिदमूचे सहचरी ॥ २ ॥

सं० टी०—वसंत इति । वसंतकाले काचित्सहचरी सखी सरसं सविलासं इदं वक्ष्यमाणं राधां प्रत्यूचे अवदत् । कथंभूतां राधां वासंतीकुसुमसुकुमारैर्माधवीपुष्पकोमलैरवयवैरंगैरुपलक्षितां । उपलक्षणे तृतीया । कथंभूतां राधां कांतारे दुर्गमे वर्त्मनि भ्रमंतीं । पुनः कथंभूतां बहुविहितं वारंवारं दूतीद्वारेण कृतं कृष्णानुसंधानं यया । पुनः कथंभूतां अमंदं अत्युत्कंठं यथा स्यात्तथा कंदर्पज्वरेण जनिता उत्पादिता या चिंता तत्कृता या आकुलता तया कृत्वा चलंती उद्गच्छंती बाधा पीडा यस्याः ॥ २ ॥

भा० टी०—वसंत ऋतुके पुष्पों करके सुकुमार अंगोंसे उपलक्षित, (शोभितहुई) गंव्हर वनमें भ्रमतीहुई· वारंवार (दूतीद्वारा) कृष्णकी प्राप्ति चाहतीहुई अत्यंत उत्कंठासे कामज्वर करके उत्पादन कीहुई चिंताकी व्याकुलतासे उँठती हुई पीडावाली, राधाको वसंत समयमें सहचरी (सखी) रससहित, ईस (वचनको) कहती भई ॥ २ ॥

पूर्वोक्तमर्थं गीतेनाह—

अथ तृतीयप्रबंधो वसंतरागेण रूपकताले गीयते

अब तीसरा प्रबंध वसंतरागकरके रूपक तालमें गाया जाताहै—

**ललितलवंगलतापरिशीलनकोमलमलयसमीरे ॥ मधुकरनिकरकरंबितकोकिलकूजितकुंजकुटीरे ॥ १ ॥ विहरति हरिरिह सरसवसंते नृत्यति युवतिजनेन समं सखि विरहिजनस्य दुरंते ॥ ध्रु० ॥**

सं०टी०—ललितेति । एतस्य प्रबंधस्य वसंतरागः रूपकतालः तल्लक्षणं "शिखंडबर्होच्चयबद्धचूडः पुष्णन्पिकं चूतलतांकुरेण । भ्रमन्मुदावासमनंगमूर्तिर्मत्तो मतंगस्य वसंतराग" इति। हे सखि हरिः इह सरसवसंते विहरति युवतिजनेन समं नृत्यति चेति ध्रुवगतपदेनान्वयः । हे राधे हरिः कृष्णः इह अस्मिन् मनोहरवसंतसमये क्रीडति युवतिजनेन समं कामिनीसमूहेन सह नर्तनं करोति च । कुत्र स्थले इत्यपेक्षायां सप्तमपद्यस्थितवृंदावनाविपिन शब्देनान्वयः । कीदृशे विरहिजनस्य दुरंते दुःखेनापि गंतुमशक्ये इति वसंत वृंदावनयोर्विशेषणं । कीदृशे वसंतसमये ललितेत्यादिसप्तपदीपदानि वसंतस-

मयविशेषणानि ललितायाः मनोहरायाः लवंगलतायाः लवंगशाखायाः परिशीलनेन संपर्केण कोमलो गंधमनोहरः मलयसमीरो मलयानिलो यत्र । अनेन वायोः सुगंधत्वेन शीतत्वादीन्युक्तानि । मधुकरेति मधुकरनिकरेण भ्रमर समूहेन करंबितैर्मिश्रितैः कोकिलैः कूजितः शब्दितः कुंज एव लतागृहमेव कुटीरोऽल्पाकुटी यत्र ॥ १ ॥

भा० टी०–हे सखि! ललित अर्थात् मनोहर लौंग वृक्षकी शाखाके संपर्कसे मनोहर गंधयुक्त मलयाचलका वायुवाले और भ्रमरोंके समूहोंसे मिलेहुए कोकिला पक्षियोंके कूजितहुये कुंज और लतास्थानोंवाले, ईस सरस वसंत ऋतुमें श्रीकृष्ण ( वृंदावनविषे ) क्रीड़ा करता है, और कामिनी जनोंके संग नृत्य करताहै ( वह वृंदावन ) विरही जनको प्राप्त होना दुर्लभ है अथवा विरही जनको दुर्लभ वसंत समयमें क्रीड़ा करता है ॥ १ ॥

उन्मदमदनमनोरथपथिकवधूजनजनितविलापे ॥
अलिकुलसंकुलकुसुमसमूहनिराकुलबकुलकलापे ॥ २ ॥

सं० टी०–उन्मदेति । उद्गतौ मदमदनौ हर्षकामौ यत्र एवं भूतो मनोरथोयस्य एवंभूतो यः पथिकवधूजनः पांथस्त्रीजनस्तेनोत्पादितोविलापः परिदेवनं यत्र । अलिकुलेति अलिकुलैः भ्रमरसमूहैः संकुलोव्याप्तः कुसुमसमूहस्तेन निराकुलो निःशेषेण आकुलः बकुलानां वृक्षाणां कलापः समूहो यत्र ॥ २ ॥

भा० टी०–( उन्मत्त ) बढ़ा हुआ हर्ष और कामदेवसे युक्त मनोरथवाले मार्गमें चलती हुई स्त्री जनोंका उत्पन्न होरहे विलाप जिसमें, और भ्रमरोंके समूहों करके व्याप्तहुए पुष्पोंके समूह करके निरंतर आकुल होरहा है बकुल वृक्षोंका समूह जिसमें ॥ २ ॥

मृगमदसौरभरभसवशंवदनवदलमालतमाले ॥ युवजनहृदय विदारणमनसिजनखरुचिकिंशुकजाले ॥ ३ ॥

सं० टी०–मृगमदेति । मृगमदस्य कस्तूरिकायाः सौरभरभसवशंवदा सुरभितोत्साहस्यायत्तवादिनी नवा नूतना दलमाला पत्रपंक्तिर्येषां ईदृशास्तमाला यत्र नूतनपत्रस्तमालो मृगमदगंधमनुकरोतीति । युवजनेति युवजनानां तरुणजनानां हृदयं विदारयति एवंविधो यो मनसिजः कंदर्पस्तस्य यानि नखानि तद्वत् रुचिर्दीप्तिर्येषां एवंभूतानां किंशुकानां पलाशपुष्पाणां जालं समूहो यत्र ॥ ३ ॥

भा० टी०–कस्तूरीकी सुगंधिके उत्साहको कहनेवाली नवीन पत्तोंकी पंक्तियोंवाले तमाल वृक्ष हैं जिसमें अर्थात् जहां तमाल वृक्षही कस्तूरीकी सुगंध देते हैं और जवीन जनोंके हृदयको फाड़नेवाले कामदेवके नखों सरीखी कांतिवाले टेशूके वृक्षोंका समूह है जिसमें ३

**मदनमहीपतिकनकदंडरुचिकेशरकुसुमविकाशे ॥ मिलितशिलीमुखपाटलिपटलकृतस्मरतूणविलासे ॥ ४ ॥**

सं० टी०–मदनेति । मदनमहीपतेः कामनृपस्य कनकदंडछत्रं तद्वत् रुचिर्यस्य एवंभूतः केशरकुसुमविकाशो नागकेशरपुष्पप्राचुर्यं यत्र । मिलितेति मिलिताः शिलीमुखाः भ्रमराः येषु तैः पाटलीपटलैः पाटलपुष्पसमूहैः कृतः स्मरतूणविलासः कामतूणीरचेष्टितं यस्मिन् तस्मिन् ॥ ४ ॥

भा० टी०–कामदेव राजाका सुवर्णका दंडयुक्त छत्र सरीखी कांतिवाले नागकेशरोंके पुष्पोंका प्रकाश है जिसमें और मिले हुए भ्रमरोंवाले पाडलके पुष्पोंके समूहों करके किया है कामदेवका तूणी ( बाण घालनेंके भाथा ) का चेष्टित जिस समयमें ॥ ४ ॥

**विगलितलज्जितजगदवलोकनतरुणकरुणकृतहासे ॥ विरहिनिकृंतनकुंतमुखाकृतिकेतकिदंतुरिताशे ॥ ५ ॥**

सं० टी०–विगलितेति । विगलितस्य शिथिलावयवस्य अतएव लज्जितस्य जगतः अवलोकनेन दर्शनेन तरुणकरुणैः तरुणकरुणवृक्षैः पुष्पविकाशव्याजेन कृतो हासो हास्यं यत्र । विरहीति विरहिनिकृंतनानि वियोगिमारकानि कुंतमुखाकृतीनि भल्लमुखाकाराणि यानि केतकीपुष्पाणि तैर्दंतुरिता व्याप्ता आशा दिशो यस्मिन् तस्मिन् ॥ ५ ॥

भा० टी०–शिथिल अंगवाले लज्जित हुए जगत्के देखनेंसे नवीन करुण ( कोमल ) वृक्षोंनें किया है हास्य ( खिलना ) जिसमें; और विरही जनोंको मारनेंवाले भालाके मुख सरीखे आकारवाले केतकीके पुष्पोंसे व्याप्त हो रही हैं दिशा जिसमें ॥ ५ ॥

**माधविकापरिमलललिते नवमालतिजातिसुगंधौ ॥ मुनिमनसामपि मोहनकारिणि तरुणाकारणबंधौ ॥ ६ ॥**

सं० टी०–माधविकेति । माधविकायाः वासंतीलतायाः परिमलेन गंधेन ललिते मनोहरे नवमालिकानि मालतीपुष्पाणि जातिः जातिपुष्पाणि ताभ्यां

सुगंधौ मुनिमनसामपि ऋषिचित्तानामपि मोहनकारिणि मदनजनके तरुणानां यूनां अकारणबंधौ सहजमित्रे ॥ ६ ॥

भा० टी०—कुंद, कुसेरी लताओंकी सुगंधसे मनोहर; नवीन मालती और जूईके पुष्पोंसे सुगंधित, मुनिजनोंके मनोंकोभी मोहनेवाली जवान पुरुषोंसे सहजमेंही मित्रता करनेवाली, ( ऐसी वसंतऋतुमें, ) ॥ ६ ॥

**स्फुरदतिमुक्तलतापरिरंभणमुकुलितपुलकितचूते ॥ वृंदावनविपिने परिसरपरिगतयमुनाजलपूते ॥ ७ ॥**

सं० टी०—स्फुरदिति । वृंदावनविपिने हरिः क्रीडतीत्यन्वयः । स्फुरंत्याश्चलंत्या अतिमुक्तलतायाः परिरंभणेन आलिंगनेन मुकुलितः पुष्पितः पुलकितः हृष्टआम्रवृक्षो यत्र कथंभूते वृंदावनविपिने परिसरेति परिसरे पर्यंतभुवि परिगतं प्राप्तं यत् यमुनाजलं तेन पूते पवित्रे ॥ ७ ॥

भा० टी०—स्फुरती हुई मधु माधवीकी लतासे मिलने करके पुष्पित तथा रोमांचित हुए आम्रवृक्षोंवाले और चारों तर्फकी भूमिमें प्राप्त हुए यमुनाके जलकरके पवित्र हुए; वृंदावन नामक वनमें " श्रीकृष्णभगवान् क्रीड़ा करते हैं " ॥ ७ ॥

**श्रीजयदेवभणितमिदमुदयतु हरिचरणस्मृतिसारम् ॥ सरसवसंतसमयवनवर्णनमनुगतमदनविकारम् ॥ ८ ॥**

इति श्रीगीतगोविंदे तृतीयः प्रबंधः ॥ ३ ॥

सं० टी०—श्रीजयदेवेति । श्रीजयदेवकवेरिदं भणितं उदयतु उदयं प्राप्नोतु इत्यर्थः । हरिचरणयोः स्मृतिः स्मरणं सारो मुख्यो यत्र । सरसं सुमनोहरं वसंतसमयसंबंधिनो वनस्य वर्णनं यत्र अनुगतः अनुकृतः मदनविकारः कामविलासो यस्मिन् ॥ ८ ॥

भा० टी०—श्रीकृष्णके चरणोंकी स्मृति करानेमें ( सार ) मुख्य, मनोहर वसंत समयके वनका वर्णन ( तद्वत् ) अनुकूल किया हुआ कामदेवके विलासवाला, यह श्री जयदेव कविका कथन उदय हो ( जगत्में प्रकाश हो, ) ॥ ८ ॥ इति श्रीगीतगोविन्दस्य रसिकप्रियानाम भाषाटीकायां तृतीयः प्रबंधः ॥ ३ ॥

वियोगिनां दुःसहं वसंतवायुं वर्णयति—

**श्लोकः ॥ दरविगलितमल्लीवल्लिचंचत्परागप्रकटितपटवासैर्वासयन् काननानि ॥ इह हि दहति चेतः केतकीगंधबंधुः प्रसरदसमबाणप्राणवद्गंधवाहः ॥ १ ॥**

सं० टी०—दरेति । इह वसंते गंधवाहो वायुः विरहिणां चेतः दहतीत्यन्वयः । अर्थात् किंकुर्वन् दरविगलितायाः ईषद्विकसितायाः मल्ल्याः मल्लिकायाः मल्लीषु लतासु चंचद्भिरुद्गच्छद्भिः परागैः पुष्परजोभिः प्रकटितपटवासैः स्फुटीकृतपटवासचूर्णैः काननानि वनानि वासयन् सुरभीकुर्वन् । पुनःकथंभूतः केतकीपुष्पाणां गंधस्य बंधुर्मित्रं । प्रसरंतो ये असमबाणाः कामबाणास्तेषां प्राणवत् प्राण इव ॥ १ ॥

भा० टी०—कछुक खिली हुई मल्लिका (मोगरी )की लताओंमें प्रकट हुए पराग अर्थात् पुष्परजोंकरके प्रकाशित किया ( दीखता हुआ ) पटवासचूर्ण ( बुका ) अर्थात् कपड़ोंको सुगंधित करनेवाले चूर्णविशेषोंकरके बनोंको सुगंधित करता हुआ, और केतकीके पुष्पोंके सुगंधका मित्र, चलते हुए कामदेवके बाणोंके प्राणकी तरँह म लूम होता हुआ, वायु निश्चय यहां वसंतसमयमें ( विरहीजनोंके) चित्तको दग्ध करता है ॥ १ ॥

वसंतवासराणामनंगोद्दीपकत्वमाह—

**श्लोकः ॥ उन्मीलन्मधुगंधलुब्धमधुपव्याधूतचूतांकुरक्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ॥ नीयंते पथिकैः कथं कथमपि ध्यानावधानक्षणप्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥ २ ॥**

सं टी०—उन्मीलदिति । अमी वसंतसंबधिनो वासराः दिवसाः पाथिकैर्मार्गस्थैर्विरहिभिः कथं कथमपि अत्यंतं दुःखेन नीयंते उल्लंघ्यंते । कथंभूताः वासराः उन्मीलदिति उन्मीलंश्चासौ मधुगंधश्च पुष्परसगंधस्तत्र लुब्धा ये मधुपा-भ्रमरास्तैर्व्याधूताः कंपिताः ये चूतांकुराः आम्रांकुरास्तेषु क्रीडतां कोकिलानां काकलीकलकलैः सूक्ष्माव्यक्तमधुरध्वनिकोलाहलैः कष्टजनकत्वेन उद्गीर्णः

प्रकाशितः कर्णज्वरः श्रवणोपतापो येषु । कथं नीयंत इत्यत आह ध्याने चिंतने अवधानं चित्तैकाग्र्यं तेन क्षणं अल्पकालं प्राप्तया अनुभूतया: प्राण-समाया: समागमरसेन संबंधस्वरूपरसेन उल्लासो येषां ते ॥ २ ॥

भा० टी०–कछुक खिलते हुए पुष्परस गंधपर लुभायमान भ्रमरोंकरके कंपित जो आम्रवृक्षोंके अंकुर तिनपर क्रीड़ा करते हुए कोकिलाओंकी सूक्ष्म मधुर ध्वनियों करके, कानोंमें खेद होता है जिन दिनोंमें ऐसे, ये दिन ध्यान करके चिंतवन करनेंमें प्राप्त हुई प्राणप्रियाके समागमका रसके उल्लासवाले ( पथिक ) वटोहीजनोंनें कौंन प्रकारसे अत्यंत दुःख करके उलंघे जाते हैं; अर्थात् इस वसंतऋतुके दिन काटनें प्रियारहित विरही जनोंको बड़े मुसकिल हैं ॥ २ ॥

अमुमेव श्लोकोक्तमर्थं गीतेनाह–

श्लोकः ॥ अनेकनारीपरिरंभसंभ्रमस्फुरन्मनोहारिविलासलालसम् ॥ मुरारिमारादुपदर्शयंत्यसौ सखी समक्षं पुनराह राधिकाम् ॥ ३ ॥

सं० टी०–अनेकेति । असौ सखी राधिकां पुनराह इत्यन्वयः । कथंभूता सखी आरात् दूरे वर्तमानं समक्षं यथा स्यात्तथा कृष्णं उपदर्शयंती विषयं कारयंती । कथंभूतं हरिं अनेकनारीणां परिरंभसंभ्रमेणालिंगनादरेण स्फुरन् इतस्ततो गच्छन् मनोहारी मनोज्ञो यो विलासः क्रीडा तत्र लालसं आदरवंतम् ॥ ३ ॥

भा० टी०–अनेक गोपियोंका आलिंगनके आदरसे जहां तहां प्राप्त होती हुई जो मनोहर विलास ( क्रीड़ा ) तिसमें अत्यंत उत्कंठावाले, श्रीकृष्णको दूरसे समीपमें दिखाती हुई यह सखी राधाजीको फिर बोलती भई ॥ ३ ॥

अथ चतुर्थप्रबंधो रामकरिरागेण रूपकताले गीयते ।

अब चौथा प्रबंध रामकरि ( रामकली ) रागसे रूपकतालमें गाया जाता है ॥

चन्दनचर्चितनीलकलेवरपीतवसनवनमाली ॥ केलिचलन्मणिकुंडलमंडितगंडयुगस्मितशाली ॥ १ ॥ हरिरिह मुग्धवधूनिकरे विलासिनि विलसति केलिपरे ॥ ध्रु० ॥

सं० टी०—चंदनेति । रामकरिरागः तस्य लक्षणं "स्वर्णप्रभाभास्वरभूषणा च नीलं निचोलं स्वतनौ वहंती । कांतोपदोपांतमधिश्रितापि सानोन्नता रामकरिः प्रदिष्टा इति" । हे विलासिनि राधे इह मुग्धवधूनिकरे मनोहरकामिनी समूहे हरिर्विलसति क्रीडतीत्यन्वयः । कथंभूते मुग्धवधूनिकरे केलिपरे क्रीडातत्परे । कथंभूतो हरिः चंदनेति चंदनेन मलयजेन चर्चितं रेखाकारेणानुलिप्तं नीलं कलेवरं शरीरं यस्य पीतं सुवर्णवर्णं वसनं वस्त्रं यस्य वनमाला यस्यास्तीति ततः प्रत्येकं कर्मधारयः । पुनः कथंभूतः केल्या क्रीडया चलती ये मणियुक्ते कुंडले ताभ्यां मंडितं शोभितं गंडयुगं यस्य स्मितेन ईषद्धास्येन शालते शोभते ततः कर्मधारयः ॥ १ ॥

भा० टी०—हे राधाजी! क्रीड़ामें तत्पर हुए इस मनोहर कामिनीसमूहमें, चंदनसे चर्चित नील शरीर और पीतांबरधारी वनमाली, उत्तम पुष्पोंकी मालावाले क्रीडा करनेंसे हिलते हुए मणिकुंडलोंकरके शोभित कपोलोंवाले और मंद मुसकानसे शोभित ऐसे, श्रीकृष्ण क्रीड़ा करते हैं ॥ १ ॥

**पीनपयोधरभारभरेण हरिं परिरभ्य सरागम् ॥**
**गोपवधूरनु गायति काचिदुदंचितपंचमरागम् ॥ २ ॥**

सं० टी०—पीनेति । हे राधे काचित् गोपवधूः गोपांगना पीनपयोधरभारभरेण विपुलकुचगौरवातिशयेन सरागं यथा तथा परिरभ्य आलिंग्य हरिं अनुपश्चादूर्ध्वकृतं पंचमरागं गायति गानं करोति ॥ २ ॥

भा० टी०—( हे राधे, ) कोईके गोपी बड़ी भारी कुचाओंके भारसे श्रीकृष्णको प्रीति सहित, मिलके पीछें ऊपरको उठाके पंचमरागको गावती है ॥ २ ॥

**कापि विलासविलोलविलोचनखेलनजनितमनोजम् ॥**
**ध्यायति मुग्धवधूरधिकं मधुसूदनवदनसरोजम् ॥ ३ ॥**

सं० टी०—कापीति । काचिन्मुग्धवधूर्मनोहरगोपांगना अधिकमतिशयेन मधुसूदनवदनसरोजं कृष्णस्य मुखांबुजं ध्यायति चिंतयति । विलासेन विलोलयोर्विलोचनयोः खेलनेन संचारेण जनित उत्पादितो मनोजः कामो येन तत ॥ ३ ॥

भा० टी०—कोईक, मनोहर गोपी, क्रीड़ा करके नेत्रोंके देखनेंसे उत्पन्न किया है कामदेव जिसनें, ऐसे श्रीकृष्णके मुखकमलको, अत्यंत चिंतवन करती है ॥ ३ ॥

कापि कपोलतले मिलिता लपितुं किमपि श्रुतिमूले ॥
चारु चुचुंब नितंबवती दयितं पुलकैरनुकूले ॥ ४ ॥

सं० टी०—कापि कपोलेति । कापि नितंबवती गोपांगना दयितं कृष्णं कपोलतले गंडदेशे चारु मनोज्ञं यथा स्यात्तथा चुचुंब चुंबितवती । कथंभूता किमपि कार्यं लपितुं वक्तुं श्रुतिमूले कर्णप्रदेशे मिलिता संलग्ना । कीदृशे कपोलतले पुलकैः रोमोद्गमैः अनुकूले प्रेमप्रियकथने ॥ ४ ॥

भा० टी०—कोईक गोपी कछुक कहनेंकेवास्ते कानके निकट लगी हुई प्रिय श्रीकृष्णको, रोमांचित हुए कपोल स्थलविषे मनोहरतासे चुंबती भई ॥ ४ ॥

केलिकलाकुतुकेन च कांचिदमुं यमुनाजलकूले ॥
मंजुलवंजुलकुंजगतं विचकर्ष करेण दुकूले ॥ ५ ॥

सं० टी०—केलीति । काचिद्गोपी केलिकलाकुतुकेन शृंगाररसक्रीडातात्पर्येण हेतुना करेण हस्तेनामुं कृष्णं दुकूले वस्त्रे विचकर्ष आकृष्टवती । कथंभूतं अमुं यमुनाजलकूले यमुनाजलोपलक्षिते कूले तीरे मंजुलो मनोहरो यो वंजुलकुंजो वेतसलतागृहं तत्रगतं वर्तमानम् ॥ ५ ॥

भा० टी०—और कोईक गोपी, यमुना जलके किनारेपर मनोहर वेतलताओंके कुंज (घर) में प्राप्त हुए, इस श्रीकृष्णको शृंगाररसकी क्रीड़ाके तात्पर्यसे (अपनें) हाथ करके वस्त्रविषे (पकरके) खींचती भई ॥ ५ ॥

करतलतालतरलवलयावलिकलितकलस्वनवंशे ॥
रासरसे सह नृत्यपरा हरिणा युवतिः प्रशशंसे ॥ ६ ॥

सं० टी०—करतलेति । काचित् युवतिः गोपांगना हरिणा कृष्णेन प्रशशंसे स्तुता रासरसे गोपीक्रीडानुरागे सहनृत्यपरा कृष्णसमकालं नृत्यंती । कथंभूते रासरसे करतलयोर्हस्तयोस्तालेन चपेटध्वनिना तरलया चंचलया

वलयावल्या कंकणपंक्त्या कलितः मिश्रितः कलस्वनवंशोऽव्यक्तमधुरशब्दसहितो वंशो वेणुर्यत्र ॥ ६ ॥

भा० टी–हाथोंकी तालोंकरके चंचलतासे कंगणोंकी पंक्तिका मिला हुआ मधुर शब्द-वाली वंशी बजती है, जिसमें ऐसे रासे रसमें श्रीकृष्णके समैकालतक नाँचती हुई कोई गोपी श्रीकृष्णनें सराँही प्रशंसा करी गई ॥ ६ ॥

**श्लिष्यति कामपि चुंबति कामपि रमयति कामपिरामाम् ॥**
**पश्यति स स्मितचारु परामपरामनुगच्छति वामाम् ॥ ७ ॥**

सं० टी०–श्लिष्यतीति । हे राधे श्रीकृष्णः कामपि गोपिकां श्लिष्यति आलिंगति तथा कामपि चुंबति तथा कामपि रामां रमयति क्रीडयति अपरां नायिकां स्मितचारु हासमनोहरं यथा स्यात्तथा पश्यति अपरां वामां सुंदरीमनुगच्छतीत्यर्थः ॥ ७ ॥

भा० टी०–वहे श्रीकृष्ण, किसी गोपीसे मिलता है किसीको चुंबता है किसी गोपीसे रमण करता है मनोहर हास्य हो जैसे तैसे किसीको देखतो है अन्ये किसी सुंदरी ( गोपीके ) पीछे पीछे चलता है ॥ ७ ॥

**श्रीजयदेवकवेरिदमद्भुतकेशवकेलिरहस्यम् ॥**
**वृंदावनविपिने ललितं वितनोतु शुभानि यशस्यम् ॥ ८ ॥**
**इति श्रीगीतगोविंदे चतुर्थः प्रबंधः ॥ ४ ॥**

सं० टी०–श्रीजयदेवेति । श्रीजयदेवकवेरिदं गीतं शुभानि कल्याणानि वितनोतु । अर्थात् भक्तानां गीतं कीदृशं अद्भुतं आश्चर्यकरं केशवस्य कृष्णस्य केलिरहस्यं क्रीडाहर्षौ यत्र अद्भुतत्वं युगपत्सर्वासां प्रीत्युत्पादनात् वृंदावनविपिने वृंदावननाम्नि वने ललितं नानारसान्वितमित्यर्थः । यशस्यं यशसे हितं यशस्करमित्यर्थः ॥ ८ ॥

भा० टी०–श्रीजयदेव कविका यहे ( गीत ) कल्याणोंको विस्तारित करो; कैसा है यह गीत कि, आश्चर्यकारक श्रीकृष्णकी क्रीड़ाका रहस्य है और वृंदावन नामक वनमें अनेक प्रकारके रसोंसे मनोहर है और यशकारक है ॥ ८ ॥ इति श्रीगीतगोविन्दस्य रसिकप्रिया नाम भाषाटीकायां चतुर्थः प्रबंधः ॥ ४ ॥

श्लोकः ॥ विश्वेषामनुरंजनेन जनयन्नानंदमिंदीवर
श्रेणीश्यामलकोमलैरुपनयन्नंगैरनंगोत्सवम् ॥
स्वच्छंदं व्रजसुंदरीभिरभितः प्रत्यंगमालिंगितः
श्रृंगारः सखि मूर्तिमानिव मधौ मुग्धो हरिः क्रीडति ॥ १ ॥

सं० टी०—विश्वेषामिति । हे सखि राधे मधौ वसंते मुग्धो मनोहरो हरिः कृष्णः क्रीडतीत्यन्वयः । क इव मूर्तिमान् शरीरधारी श्रृंगाररस इव । किं कुर्वन् अनुरंजनेन अनुरागेण विश्वेषां सर्वेषां भक्तानां आनंदं संतोषं जनयन् । पुनः किं कुर्वन् इंदीवरश्रेणीनामिव नीलकमलपंक्तीनामिव श्यामलकोमलैः कृष्णमनोहरैरंगैरवयवैः अनंगोत्सवं कामहर्षं उपनयन् उत्पादयन् । पुनःकथंभूतःस्वच्छंदं स्वेच्छया व्रजसुंदरीभिः गोपीभिः अभितः सर्वतो भावेन प्रत्यंगं प्रत्यवयवं आलिंगितः गोपीभिरालिंगने यया यदंगं प्राप्तं तया तदेवालिंगितमितिभावः । "श्यामो भवति श्रृंगारः सितो हासः प्रकीर्तितः" इति श्रृंगारविशेषणान्यप्येतानि पदानि ॥ १ ॥

भा० टी०—हे राधे, अनुराग करके संपूर्ण [ भक्तोंको ] आनंद करता हुआ और, नीलकमलोंकी पंक्तिसरीखे श्याम सुंदर अंगोंकरके कामदेवके हर्षको उत्पन्न करता हुआ गोपियों करके इच्छापूर्वक सब प्रकारसे अंगअंगमें आलिंगित हुआ ( अर्थात् जिस गोपीके जौन अंग हाथ लगा वह उसहीके लिपट रही है ) ऐसा, मनोहर श्रीकृष्ण वसंतऋतुमें मूर्त्तिमान्, शरीरधारी शृंगाररसकी तरह क्रीड़ा करता है ॥ १ ॥

मलयानिलदुःसहत्वे कारणमाह—

श्लोकः ॥ अद्योत्संगवसद्भुजंगकवलक्लेशादिवेशाचल-
प्रालेयप्लवनेच्छयाऽनुसरति श्रीखंडशैलानिलः ॥
किंच स्निग्धरसालमौलिमुकुलान्यालोक्यहर्षोदया
दुन्मीलंति कुहूःकुहूरिति कलोत्तालाः पिकानां गिरः ॥ २ ॥

सं० टी०—अद्येति । राधे अद्य इदानीं वसंतसमये श्रीखंडशैलानिलः मलयजपवनः उत्संगे क्रोडे वसंतो ये भुजंगाः सर्प्पास्तेषां कवलक्लेशादिव

ग्रासोपतापादिव ईशाचलं हिमाचलं प्रालेयप्लवनेच्छया तुहिनमज्जनेच्छयानुसरति अनुगच्छति किंच पक्षांतरे पिकानां गिरो वाण्यः स्निग्धरसालमौलिमुकुलानि कोमलचूतस्तबककुड्मलानि आलोक्य दृष्ट्वा हर्षोदयात् आनंदोदयात् उन्मीलंति उद्गच्छंति। कथंभूता गिरः कुहूः कुहूरिति कलोत्तालाः कुहूःकुहूरित्याकारेणाऽव्यक्तमधुरशब्देनोत्तालाः प्रकाशाः ॥ २ ॥

भा० टी०—हे राधे, अब मानों मलयाचल पर्वतकी वायु गोदीमें (छातीपर) वसते हुए सर्पोंके ग्रास करनेंके क्लेशकी तरंह (दुःखित होके) हिमाचलकी ठंढकमें गोता मारनेंकी इच्छा करके जाती है और कुहू कुहू ऐसें मधुर शब्दसे प्रकाशवाली मयूरोंकी वाणी, कोमल आम्र वृक्षोंकी डालियोंपर कछुक खिली हुई कलियोंको देखिकै, आनंदके उदयसे अच्छी तरंह बोली जाती है ॥ २ ॥

कविः कथोपक्रमं त्यक्त्वा लोकानाशिषयाति—

श्लोकः ॥ रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवा
मभ्यर्णंपरिरभ्य निर्भरमुरः प्रेमांधया राधया ॥
साधु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुति
व्याजादुद्भटचुंबितः स्मितमनोहारी हरिः पांतु वः ॥ ३ ॥

इति श्रीकविराज श्रीजयदेवकृते गीतगोविंदे महाकाव्ये
सामोददामोदरोनाम सटीकः प्रथमः सर्गः ॥ १ ॥

सं० टी०—रासोल्लासेति। हरिःकृष्णः वः युष्मान् पातु इत्यन्वयः। कथंभूतो हरिः रासोल्लासभरेण गोपीक्रीडायां हर्षातिशयेन विभ्रमभृतां शृंगारविलासधारिणीनां आभीरवामभ्रुवां गोपिकानां अभ्यर्णं समीपं निर्भरं गाढं यथा तथा उरः वक्षःस्थलं परिरभ्य आलिंग्य राधया उद्भटं प्रकटं यथा स्यात्तथा गीतस्तुतिव्याजात् गानप्रशंसाछलेन चुंबितः। ननु भवतु तासु विभ्रमः प्रत्यक्षं युवतिगणं पश्यंत्या तया कथं चुंबितस्तत्राह प्रेमांधया प्रेम्णा हर्षातिशयेनांधया कृष्णं विनान्यं न पश्यंतीति तया। किं कृत्वा त्वद्वदनं त्वन्मुखं सुधामयममृतमयं साधु शोभनं इति व्याहृत्य उक्त्वा। कथंभूतो हरिः स्मितमनोहारी राधायाः चुंबनकौशलं दृष्ट्वा स्मितेन ईषद्धास्येन मनो हर्तुं शीलं यस्य सः॥ ३ ॥

भा० टी०—गोपियोंकी क्रीड़ाके अत्यंत हर्षसे, शृंगारविलासको धारण करनेवाली गोपियोंके समीप दृढतासे छातीको पकरके प्रेममें अंधीहुई ( मग्नहुई ) राधिकासे तुह्मारा मुख अमृतमय है सुंदर है ऐसे कहके गीत और स्तुतिके छलसे प्रत्यक्ष चुंबित हुए और मंद मुसकानसे मनको हरते हुए श्रीकृष्ण तुह्मारी रक्षा करो ॥ २ ॥ इति श्रीगीतगोविन्दस्य रसिकप्रिया नाम भाषाटीकायां प्रथमः सर्गः ॥ १ ॥

---

## अथ द्वितीयसर्गः प्रारभ्यते.

अब दूसरा सर्ग प्रारंभ किया जाता है—

**श्लोकः ॥ विहरति वने राधा साधारणप्रणये हरौ विगलितनिजोत्कर्षादीर्ष्यावशेन गतान्यतः ॥ क्वचिदपि लताकुंजे गुंजन्मधुव्रतमंडलीमुखरशिखरे लीना दीनाप्युवाच रहः सखीम् ॥ १ ॥**

सं टी०—विहरतीति । राधा रहः एकांते सखीं उवाच । कथंभूता राधा वने वृंदावने हरौ कृष्णे विहरति क्रीडति सति विगलितनिजोत्कर्षात् गतनिजभाग्यात् ईर्ष्यावशेन असहिष्णुतया अन्यतोऽन्यस्मिन् स्थले गता । कथंभूते हरौ साधारणप्रणये अन्यगोपीतुल्यप्रेम्णि । अतएव क्वचिदपि लताकुंजे लतागृहे लीना गुप्ता । कथंभूते कुंजे गुंजतां गंभीरशब्दं कुर्वताम् मधुव्रतानां भ्रमराणां मंडल्या समूहेन मुखरशिखरे शब्दायमानाग्रभागे अतएव दीनापि दुःखितापि ॥ १ ॥

भा० टी०—वृंदावनमें साधारण प्रेमवाले श्रीकृष्ण क्रीड़ा करने लगे तब अपना भाग्य हीन जानिकै, ईर्षाके वशसे अन्य जगह चली गई हुई कहींक कूंजते हुए भ्रमरोंकी मंडलीके समूहसे शब्दायमान अग्रभागवाले लताकुंज, लताओंकी गुफामें ( यह ) छिपी हुई दुःखित हुई भी राधाजी एकांतमें सखीको कहती भई ॥ १ ॥

श्लोकोक्तमर्थं गीतेनाह—

अथ पंचमप्रबंधो गुर्जरीरागेण रूपकताले गीयते.

अब पांचवा प्रबंध गुर्जरी रागसे रूपकतालमें गाया जाता है—

**संचरदधरसुधामधुरध्वनिमुखरितमोहनवंशं॥चलितदृगंचलचंचलमौलिकपोलविलोलवतंसं ॥ १ ॥ रासे हरिमिह विहितविलासं ॥ स्मरति मनो मम कृतपरिहासम् ॥ ध्रु० ॥**

सं० टी०—संचरदिति । हे सखि मम मनः हरिं स्मरति गोचरं करोति सर्वानुभूतविषयत्वात् । कथंभूतं हरिं संचरता उद्गच्छता अधरसुधामधुरेण अधरामृतमनोहरेण ध्वनिना शब्देन मुखरितः शब्दितो मोहननामा वंशो येन । पुनः कीदृशं चालितेति चालितः आवर्जितः दृगंचलः कटाक्षो येन चंचलः दोलायमानो मौलिः शेखरो यस्य कपोलयोर्गंडस्थलयोर्विलोलौ चंचलौ वतंसौ कर्णाभरणे यस्य तं । ततः प्रत्येकं कर्मधारयः । पुनः कीदृशं इह रासे गोपीक्रीडायां विहितः कृतः विलासो क्रीडा येन तम् । मया सह कृतः परिहासः कर्म येन तम् ॥ १ ॥

भा० टी०—हे सखि, निकसता हुआ अधरामृतसे मधुरध्वनि करके बजाई है मोहन नामक वंशी जिसनें, और कटाक्ष चलानेवाले चंचल मुकुटवाले और कपोलोंके ऊपर परे झलकते हैं कर्णकुंडल जिसके और इस रासमें यथायोग्य क्रीड़ा करनेवाले (मेरे संग) हास्य करनेवाले (ऐसे) श्रीकृष्णको मेरा मन स्मरण करता है ॥ १ ॥

चंद्रकचारुमयूरशिखंडकमंडलवलयितकेशम् ॥
प्रचुरपुरंदरधनुरनुरंजितमेदुरमुदिरसुवेशम् ॥ २ ॥

सं० टी०—चंद्रकेति । चंद्रकेण विचित्रवर्णचिन्हेन चारूणां मयूरशिखंडकानां मयूरपिच्छानां मंडलेन समूहेन वलयिताः वलयाकारेण वेष्टिताः केशाः येन अत एव प्रचुरेण विस्तीर्णेन पुरंदरधनुषा अनुरंजितश्चित्रितो मेदुरो निबिडस्निग्धो यो मुदिरो मेघस्तद्वत्सुवेशं सुंदरम् ॥ २ ॥

भा० टी०—विचित्र चिन्ह करके सुंदर मोरके चंदोंके समूह करके कंगणके आकारसे केशोंको लपेटे हुए, बड़े भारी इंद्रधनुषसे विचित्र हुआ घन स्निग्ध मेघसरीखे सुंदर रूपवाले॥२॥

गोपकदंबनितंबवतीमुखचुंबनलंभितलोभम् ॥
बंधुजीवमधुराधरपल्लवमुल्लसितस्मितशोभम् ॥ ३ ॥

सं० टी०—गोपेति । गोपकदंबस्य गोपसमूहस्य नितंबवतीनां स्त्रीणां मुखचुंबनेन लंभितः लोभो येन पुनः कीदृशं बंधुजीवपुष्पवन्मधुरो मनोहरोऽधरपल्लवः ओष्ठपल्लवो यस्य । पुनः कीदृशं उल्लसितेन विकासितेन स्मितेन शोभा यस्य तम् ॥ ३ ॥

भा० टी०—गोपसमूहोंकी स्त्रियोंके मुखचुंबनसे प्राप्त हुए लोभवाले और बंधुजीवपुष्प ( दुपारी ) पुष्प सरीखा रक्त अधरोष्ठवाले और प्रकाशित किये हुए मंद मुसकान करके शोभावाले ॥ ३ ॥

**विपुलपुलकभुजपल्लववलयितबल्लवयुवतिसहस्रम् ॥**
**करचरणोरसि मणिगणभूषणकिरणविभिन्नतमिस्रम् ॥ ४ ॥**

सं० टी०—विपुलेति । विपुलाः बहुलाः पुलका रोमोद्गमा ययोस्तभ्यां भुजपल्लवाभ्यां वलयितं वेष्टितं बल्लवानां आभीराणां युवतिसहस्रं गोपिकावृंदं येन । पुनः कीदृशं करौ चरणौ उरश्च एषां समाहारः करचरणोरस्तास्मिन्वर्तमानानां मणिगणयुक्तभूषणानां किरणेन दीप्त्या विभिन्नं नाशितं तमिस्रमंधकारो येन सः तम् ॥ ४ ॥

भा० टी०—बहुतसी रोमावलियोंसे युक्त हुई भुजारूपी पत्रोंसे हजारों गोपियोंको लिपटनेवाले ( आलिंगन करनेवाले ) और हाथ चरण छाती इन्होंविषे ( वर्त्तमान ) मणिगण युक्त आभूषणोंके किरणोंकी कांतिकरके दूर करदिया है अंधकार जिन्होंनें ऐसे॥४॥

**जलदपटलचलदिंदुविनिंदकचंदनतिलकललाटम् ॥**
**पीनपयोधरपरिसरमर्दननिर्दयहृदयकपाटम् ॥ ५ ॥**

सं० टी०—जलदेति । पुनः कीदृशं हरिं जलदपटले मेघसमूहे चलतः इन्दोश्चंद्रस्य विनिंदकं समानं चंदनतिलकं चंदनकृततिलकं यत्र तादृशं ललाटं यस्य । अभूतोपमेयं । क्वचिज्जलदपटलचलदिंदुविनिंदकचंदनबिंदुललाटमिति पाठः । तदा जलदपटले चलन्संचरन् य इंदुश्चंद्रस्तस्य विशेषेण निंदकस्तिरस्कारकः चंदनबिंदुर्मंडलाकृतितिलको ललाटे यस्य तं । पुनः कीदृशं पीनौ मांसलौ यौ पयोधरौ स्तनौ तयोः परिसरस्य पर्यंतदेशस्य मर्दने निर्दयं दयारहितं हृदयकपाटं कपाटवद्विस्तीर्णं हृदयं यस्य तादृशम् ॥ ५ ॥

भा० टी०—और मेघोंके समूहमें जैसे चलता हुआ चंद्रमा प्रकाशित हो तैसेही मस्तकपर कियेहुए चंदन तिलककी शोभावाले और भारी कठोर कुचमंडलका मर्दन करनेमें निर्दय हृदयवाले ॥ ५ ॥

**मणिमयमकरमनोहरकुंडलमंडितगंडमुदारम् ॥ पीतवसनमनुगतमुनिमनुजसुरासुरवरपरिवारम् ॥ ६ ॥**

सं० टी०—मणिमयेति । मणिमयेन मणिरूपेण मकरवन्मनोहराभ्यां कुंडलाभ्यां मंडितोऽलंकृतो गंडो गंडस्थलं यस्य । पुनः कीदृशं उदारं महांतं अभीष्टदातारं वा । पुनः कीदृशं पीतं वसनं वस्त्रं यस्य महत्त्वमाह अनुगता आश्रिता ये मुनिवराः शुकनारदादयः मनुजाः परीक्षिदादयः सुरवरा ब्रह्मरुद्रादयः असुराः प्रह्लादादयस्ते परिवाराः परिजनाः यस्य तादृशम् । द्वंद्वांते वरपदस्य तेषां वरा इति ग्रहणम् ॥ ६ ॥

भा० टी०—मणियोंसे जड़ित हुए मच्छाकार मनोहर कुंडलोंकरके आभूषित कपोलोंवाले, दार चित्तवाले, पीतांबरधारी और आश्रित हुए मुनिवर, मनुष्य, देवता, असुर, येही हैं उपरिवार अर्थात् कुटुंबके जन जिसके ऐसे ॥ ६ ॥

**विशदकदंबतले मिलितं कलिकलुषभयं शमयंतम् ॥**
**मामपि किमपि तरङ्गदनंगदृशा मनसा रमयंतम् ॥ ७ ॥**

सं० टी०—विशदेति । विशदकदंबतले मिलितं उपस्थितम् । पुनः कीदृशं कलिकलुषात्कलिकालजातपापाद्भयं तन्नाशयंतम् । पुनः कीदृशं मां अपि किमपि अनिर्वचनीयं यथा स्यात्तथा तरंगन् उद्गच्छन् अनंगयोगो यस्यां तादृश्या दृष्ट्या मनसा हृदयेन च रमयंतम् ॥ ७ ॥

भा० टी०—विशाल, उत्तम कदंबके नीचे बैठे हुए, कलियुगके पापोंके भयको दूर करतेहुए और मुझको भी अति मनोहरप्रकारसे, उठताहुआ कामदेवयुक्त दृष्टि करके और मनसे रमण कराते हुए ऐसे श्रीकृष्णको मेरा चित्त स्मरण करता है, यह संबंध सब श्लोकोंमें कर लेना ॥ ७ ॥

**श्रीजयदेवभणितमतिसुंदरमोहनमधुरिपुरूपम् ॥**
**हरिचरणस्मरणं प्रति संप्रति पुण्यवतामनुरूपम् ॥ ८ ॥**
**इति श्रीगीतगोविंदे पंचमः प्रबंधः ॥ ५ ॥**

सं० टी०—श्रीजयदेवेति । श्रीजयदेवभणितं पुण्यवतां भक्तानां हरिचरणयोः स्मरणं प्रति अनुरूपं योग्यं भवतु इत्यध्याहारः । कथंभूतं अतिसुंदरं मोहनं मोहकारकं मधुरिपोः रूपं कृष्णस्य रूपं यस्मिन् ॥ ८ ॥

भा० टी०—अत्यंत सुंदर मोहनकारक श्रीकृष्णके रूपको वर्णन करनेवाला श्रीजयदेव कविका कथन अब पुण्यवाले भक्तोंके हरिचरणके स्मरणके वास्ते यथायोग्यहो ॥ ८ ॥

इतिश्रीगीतगोविंदस्य रसिकप्रियानामभाषाटीकायां पंचमः प्रबंधः ॥ ५ ॥

इदानीं राधायाः कृष्णे वसतश्चेतसो वश्यत्वमाह—

**श्लोकः ॥ गणयति गुणग्रामं भ्रामं भ्रमादपि नेहते वहति च परितोषं दोषं विमुंचति दूरतः॥ युवतिषु चलत्तृष्णे कृष्णे विहरिणि मां विना पुनरपि मनो वामं कामं करोति करोमि किं ॥१॥**

सं० टी०—गणयतीति । हे सखि मम मनाश्चित्तं पुनरप्यधुनापि कृष्णे कामिच्छां करोति किं करोमि निवृत्तौ उपायांतरं नास्तीत्यर्थः । युवतिषु चलत्तृष्णे जाताभिलाषे । पुनः कीदृशे मां विना विहरिणि क्रीडाशीले । कीदृशं मनः वामं अवशमित्यर्थः । वामत्वे कारणमाह मम मनः सापराधस्यापि कृष्णस्य गुणग्रामं गुणसमूहं गणयति भ्रमादपि भ्रामं विस्मरणं नेहते न चेष्टते भाममपीति पाठे भामं क्रोधं नेहते न वांछति तद्गुणाकर्णनेन परितोषं संतोषं वहति दोषं मदीयावज्ञादिकं दूरत एव मुंचति परित्यजति ॥ १ ॥

भा० टी०—हे सखि! गोपियोंमें अभिलाषा करनेवाले, मेरे विना क्रीडा करनेवाले श्रीकृष्णविषे फिर भी अवश हुआ मेरा, मन इच्छा करता है क्या करूं? उनके, गुणसमूहोंको गिनता है विस्मरणको भूलकर भी नहीं चाहता है और उनके गुणोंको याद करके प्रसन्न ( संतुष्ट ) होता है दोषको दूरसही त्यागताहै ॥ १ ॥

अथ षष्ठप्रबंधो मालवरागेण एकतालीताले गीयते.

अब छठा प्रबंध मालव राग करके एकताली तालमें गाया जाताहै—

पुनरपि राधा गीतेन सखीमाह—

**निभृतनिकुंजगृहंगतया निशि रहसि निलीय वसंतम् ॥**
**चकितविलोकितसकलदिशा रतिरभसभरेण हसंतम् ॥ १ ॥**
**सखि हे केशिमथनमुदारम् ॥ रमय मया सह मदनमनोरथभावितया सविकारम् ॥ ध्रु० ॥**

सं० टी०—निभृतेति । हे सखि त्वं केशिमथनं कृष्णं मया सह रमय क्रीड़ां कारय। कीदृशं कृष्णं उदारं महान्तम् । कथंभूतया मया मदनस्य मनोरथः इच्छास्मिन् भावो रताख्यः संजातो यस्याः । कथंभूतं कृष्णं सविकारं भावसहितम् । कीदृशया मया निभृतं गूढं यन्निकुंजगृहं तत्र गतया प्राप्तया । कथंभूतं कृष्णं निशि रात्रौ रहसि एकांतस्थले निलीय तिरोहितो भूत्वा वसंतं तिष्ठंतम् । कथंभूतया मया चकितं सभयं यथातथा विलोकिता दृष्टाः सकलदिशो यया । पुनः कथंभूतं कृष्णं रते रभस उत्साहस्तस्य भरेण आधिक्येन हसंतं सस्मितमुखम् । अस्मिन् गीते पूर्वार्द्धे राधाविशेषणं उत्तरार्द्धे कृष्णस्येति बोद्धव्यम् ॥ १ ॥

भा० टी०—हे सखि ! रात्रीमें एकांत छिपके रहनेवाले, रमणके उत्साहकी अधिकतासे हँसतेहुए, भाव सहित हास्य आदि करनेवाले, उदार, केशिदैत्यके मारनेवाले ऐसे श्रीकृष्णको, गूढ़े कुंजगृहोंमें गई हुई चकित होके सबदिशाओंको देखती हुई और कामदेवकी इच्छाके भावसे युक्तहुईको मेरे संग रमण करवाओ ॥ १ ॥

**प्रथमसमागमलज्जितया पटुचाटुशतैरनुकूलम् ॥**
**मृदुमधुरस्मितभाषितया शिथिलीकृतजघनदुकूलम् ॥ २ ॥**

सं० टी०—प्रथमेति । प्रथमसमागमेन नूतनसान्निध्येन लज्जितया लज्जायुक्तया । कथंभूतं कृष्णं वैलक्ष्यदूरीकरणाय पटुचाटुशतानि कुशलानि यानि चाटुशतानि स्तवशतानि तैरनुकूलं आनुकूल्यकारकम् । मृदु कोमलं मधुरं स्मितपूर्वकं भाषितं यस्याः सा तया । शिथिलीकृतं जघनदुकूलं जघनस्थितं पट्टवस्त्रं येन तम् ॥ २ ॥

भा० टी०—नवीन समागम करके लज्जित हुई और कोमल मधुर, मंद मुसकानपूर्वक वचन कहती हुई के मेरे संग, उत्तम उत्तम सैंकड़ों स्तुतिके वचन कहते हुए और जांघोंपर स्थित रेसमी वस्त्रको ढीले करते हुए, श्रीकृष्णको मिलावो ॥ २ ॥

**किसलयशयननिवेशितया चिरमुरसि ममैव शयानम् ॥**
**कृतपरिरंभणचुंबनया परिरभ्य कृताधरपानम् ॥ ३ ॥**

सं० टी०—किसलयेति । किसलयशयने पल्लवकृतशय्यायां निवेशितया । कथंभूतं कृष्णं ममैवोरसि वक्षःस्थले चिरं शयानं कृतालिंगनमित्यर्थः । कथंभूतया मया कृतं परिरंभणपूर्वकं आलिंगनपूर्वकं चुंबनं यया सा तया। कथंभूतं कृष्णं परिरभ्य आलिंग्य कृतं अधरपानं ओष्ठपानं येन सः तम् ॥ ३ ॥

भा० टी०—पत्तोंसे बनाई हुई शय्यापर सुलाई हुई और आलिंगन सहित चुंबन करती हुईके मेरे संग, मेरी ही छातीपर, बहुत कालतक शयन करनेवाले आलिंगन करके अधरामृत पान करनेवाले श्रीकृष्णको मिलावो ॥ ३ ॥

**अलसनिमीलितलोचनया पुलकावलिललितकपोलम् ॥**
**श्रमजलसिक्तकलेवरया वरमदनमदादतिलोलम् ॥ ४ ॥**

सं० टी०—अलसेति । अलसेन सुरतसौख्येन निमीलिते मुद्रिते नेत्रे यस्याः सा तया । पुलकावल्या रोमांचपंक्त्या ललितौ मनोहरौ कपोलौ यस्य तं श्रमजलेन सुरतश्रमजनितेन वारिणा सिक्तं कलेवरं शरीरं यस्यास्तया । वर मदनमदात् उत्तमकामजनितहर्षात् अतिलोलं अतिचंचलं सतृष्णमित्यर्थः॥४॥

भा० टी०—मैथुनके सुखसे कछुक आंख मींचती हुई और क्रीड़ाके परिश्रमसे पसीना युक्त शरीरवालीके संग, रोमावलियोंसे मनोहर कपोलोंवाले उत्तम कामदेवके हर्षसे अति चंचल हुए श्रीकृष्णको मिलावो ॥ ४ ॥

**कोकिलकलरवकूजितया जितमनसिजतंत्रविचारम् ॥**
**श्लथकुसुमाकुलकुन्तलया नखलिखितघनस्तनभारम् ॥ ५ ॥**

सं० टी—कोकिलेति । कोकिलकलरववत् अव्यक्तध्वनिवत् कूजितं शब्दो यस्यास्तया । जितः मनसिजस्य कामस्य तंत्रविचारः शास्त्रसिद्धांतो येन सः तम्। श्लथाः शिथिलाः कुसुमैः पुष्पैराकुलाः व्याप्ताः कुंतलाः चूर्णकुंतलाः यस्याः सा तया। नखेन लिखितश्चिह्नितो घनो निबिडः स्तनभारो येन स तम्॥ ५ ॥

भा० टी०—कोकिलाके उत्तम शब्दकी तरंह कूजनेवाली और ढीले हुए पुष्पोंकरके आकुल केशोंवालीके मेरे संग, कामदेवके शास्त्रसिद्धांतको जीतनेवाले और नखकरके कठोर कुचाओंको चिन्हित करनेवाले, श्रीकृष्णको मिलावो ॥ ५ ॥

**चरणरणितमणिनूपुरया परिपूरितसुरतवितानम् ॥**
**मुखरविशृंखलमेखलया सकचग्रहचुम्बनदानम् ॥ ६ ॥**

सं० टी०—चरणेति । चरणयोः पादयोः रणितौ शब्दितौ मणियुक्तनूपुरौ यस्याः तया । परिपूरितं संपूर्णीकृतं सुरतवितानं सुरतसमूहो येन तम् । मुखरा शब्दायमाना विशृंखला उन्मुक्ता मेखला कांची यस्याः सा तया । सकचग्रहं कचग्रहणसहितं चुंबनदानं यस्य तम् ॥ ६ ॥

भा० टी०—चरणोंमें बाजते हुए मणिजड़ित बिछुवनवाली और बाजती हुई खुली संकलोंकी तागड़ीवालीके साथ, क्रीडा समूहको परिपूर्ण करनेवाले केशोंको पकड़के मुखचुंबन करनेवाले, श्रीकृष्णको मिलावो ॥ ६ ॥

**रतिसुखसमयरसालसया दरमुकुलितनयनसरोजम् ॥**
**निःसहनिपतिततनुलतया मधुसूदनमुदितमनोजम् ॥ ७ ॥**

सं० टी०—रतिसुखेति । रतिसुखसमये सुरतसुखकाले प्रीत्या अलसया आलस्ययुक्तया । दरमुकुलितनयनसरोजं ईषन्मीलितनेत्रकमलम् । निःसहं असमर्थे निपतिता तनुलता शरीरलता यस्यास्तया । कथंभूतं कृष्णं मधुदैत्यं सूदयतीति तम् । उदितः जातो मनोजः कामो यस्य तम् ॥ ७ ॥

भा० टी०—मैथुनके सुखसमयमें प्रीतिसे आलस्ययुक्त हुई और असमर्थ हुएपर शरीररूपी लताको पटकनेके समान रहनेवालीके संग जरा मूंदेहैं कमलनयन जिसकरके उत्पन्न है कामदेव जिसके मधुदैत्यके मारनेवाले श्रीकृष्णको मिलावो ॥ ७ ॥

**श्रीजयदेवभणितमिदमतिशयमधुरिपुनिधुवनशीलम् ॥**
**सुखमुत्कण्ठितराधिकया कथितं वितनोतु सलीलम् ८ ॥**
**इतिश्रीगीतगोविंदे षष्ठः प्रबंधः ॥ ६ ॥**

सं० टी०—श्रीजयदेवेति । इदं श्रीजयदेवेन भाणितं कर्तृसुखं उक्तं गीतं पारलौकिकसुखानि ऐहिकानि च वितनोतु विस्तारयतु । केषां गायतां श्रृण्वतां च । कथंभूतं श्रीजयदेवभणितं अतिशयमधिकं मधुरिपोः कृष्णस्य निधुवनशीलं सुरतचरितं यस्मिन् । पुनः कीदृशं उत्कण्ठितया राधिकया गोपवध्वा कथितं सलीलं श्रृंगाररसक्रियासहितम् ॥ ८ ॥

भा०टी०-बहुतसे श्रीकृष्णके मैथुनचरित्रयुक्त और उत्कंठायुक्त राधिकासे कहा हुआ लीलासहित यह श्रीजयदेव कविकरके रचित गीत सुननेवाले और गानेवालोंके सुखको बढ़ाओ॥८॥

इतिश्रीगीतगोविंदस्य रसिकप्रियानाम भाषाटीकायां षष्ठः प्रबंधः ॥ ६ ॥

अधुनाऽत्युत्कण्ठ्या सख्या नीयमाना सा गोपीगणवृतं कृष्णं दृष्ट्वा परावृत्य सखीमाह—

श्लोकः ॥ हस्तस्रस्तविलासवंशमनृजुभ्रूवल्लिमद्बल्लवी वृंदोत्सारिदृगंतवीक्षितमतिस्वेदार्द्रगंडस्थलम् ॥ मामुद्वीक्ष्य विलज्जितस्मितसुधामुग्धाननं कानने गोविंदं व्रजसुंदरीगणवृतं पश्यामि हृष्यामि च ॥ १ ॥

सं० टी०—हस्तेति । हे सखि गोविंदं अहं पश्यामि हृष्यामि हर्षं प्राप्नोमि च पश्यामीति वर्तमानसामीप्याद्वर्तमानता कथंभूतं गोविंदं कानने वृन्दावने व्रजसुंदरीगणेन गोपीसमूहेन वृतं वेष्टितम् । ननु सपत्नीभिः परिवृतं दृष्ट्वा कथं ते हर्ष इत्यत आह मां उद्वीक्ष्य दृष्ट्वा हस्तात्स्रस्तो व्यतो विगलितः विलासवंशः क्रीडावंशो यस्य तम् । अनृजुभ्रूवल्लिमतीनां कुटिलभ्रूलतायुक्तानां गोपीनां समूहे उत्सारि ऊर्ध्वतीर्यग्गामिदृगंतेन कटाक्षेण वीक्षितमीक्षणं यस्य तम् मय्यागतायां भिया दृगंतचेष्टयान्यगोपीरपसारयंतामिति भावः । अतिस्वेदेनातिघर्मेणार्द्रं गण्डस्थलं यस्य तम् । विलज्जितास्मितं सलज्जहास्यं तदेव सुधामृतं तया मुग्धमाननं मनोहरं मुखं यस्य तम् ॥ १ ॥

भा० टी०—हे सखि! मुझको देखिकै हाथसे छूट गई है क्रीड़ाकी वंशी जिसकी ऐसे और कुटिल भ्रुकुटियोंवाली गोपियोंके समूहमें ऊंचे टेढ़े कटाक्षोंसे देखते हुए, अत्यंत पसीनेसे गीले कपोलोंवाले लज्जायुक्त मंद मुसकान रूपी अमृतसे मनोहर मुखवाले श्रीकृष्णको वृंदावनमें गोपीगणोंसे युक्त हुएको मैं, देखती हूं और आनंदको प्राप्त होती हूं॥१॥

पुनः विभावयन्नाह—

श्लोकः ॥ दुरालोकस्तोकस्तबकनवकाशोकलतिकाविकाशः कासारोपवनपवनोऽपि व्यथयति ॥ अपि भ्राम्यद्भृंगीरणितरमणीया न मुकुलप्रसूतिश्चूतानां सखि शिखरिणी यं सुखयति ॥ २ ॥

सं० टी०—दुरालोकेति । हे सखि दुरालोक्यते वियोगिनामुद्वेगजनकत्वात् स्तोकोल्पः स्तबको गुच्छो यस्य नवकाशोकलतिकायाः विकाशः उद्योतः मां

व्यथयाति पीडयति। किंच कासारोपवनस्य सरोवरनिकटवनस्य पवनोपि मां व्यथयाति । कासार इत्यनेन वायोः शैत्यं उपवनसंबंधित्वेन सौगंध्यं वृक्षैरुप हतगतित्वेन मांद्यं च ध्वनितम् । अपि च चूतानामाम्राणां इयं मुकुलप्रसूतिः कलिकोद्भेदो मा न सुखयति । कथंभूता प्रसूतिः भ्राम्यंतीनां चलंतीनां भ्रमरांगनानां रणितैः शब्दितैः रमणीया मनोज्ञापीत्यर्थः । शिखरिणी प्रशस्ताग्रभागवती भृंगीणां चलनं नायकान्वेषणार्थमिति ध्वनितम् । शिखरिणीनामकं छंद इतीदं सूचितम् ॥ २ ॥

भा० टी०—हे सखि! बुरे दीखते हुए स्वल्प गुच्छोंसे युक्त हुई नवीन अशोक लताका प्रकाश तथा, सरोवरके निकटवर्ती बगीचोंमांहकी वायुभी मुझको बाधा कर रही है. और भ्रमती हुई भ्रमरांगना ( भौंरि ) योंके शब्दोंसे रमणीक, सुंदर अग्रभागवाली, यह आम्रवृक्षोंकी मुकुलितप्रसूति, खिलतीहुई कलीभी मुझको, नहीं सुख करती ॥ २ ॥

अधुना कविः लोकानाशिषयति—

**श्लोकः ॥ साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासित भ्रूवल्लीकमलीकदर्शितभुजाबालार्धहस्तस्तनम् ॥ गोपीनांनिभृतं निरीक्ष्य ललितां कांश्चिच्चिरं चिंतं न्नंतर्मुग्धमनोहरो हरतु वः क्लेशं नवः केशवः ॥ ३ ॥**

**इति श्रीकविराजश्रीजयदेवकृते गीतगोविंदे महाकाव्ये अक्लेशकेशवो नाम सटीको द्वितीयः सर्गः ॥ २ ॥**

सं० टी०—साकूतेति । नवः श्रृंगारस्तरुणो वा केशवः वः युष्माकं भक्तानां क्लेशं दुःखं हरतु दूरीकरोतु । कीदृशः साकूतं साभिप्रायं स्मितमीषद्धास्यं यत्र गोपीनां निभृतं गोपीभावं निरीक्ष्य दृष्ट्वा कांचिद्दयितां अंतर्मनसि चिरं चिंतयन् मुग्धमनोहरः मोहयुक्तसुंदरः । कथंभूतं निभृतं आकुलाकुलोत्यंतास्तव्यस्तः गलन् उन्मुक्तीभवन् धम्मिल्लः केशपाशो यत्र । उल्लासिता उच्चैः कृता भ्रूवल्ली यत्र अलीकेन जृंभणादिच्छलेन दर्शिताः भुजा बालार्धहस्तस्तना यस्मिन् भुजे च बालाश्चार्धहस्तौ च स्तनौ चेति द्वन्द्वः ॥ ३ ॥

भा० टी०—भावसहित मंद मुसकानयुक्त, अत्यंत उलट पुलट खुलते हुए केशबंधसहित

ऊपरको भ्रुकुटीयोंका चढ़ाना और जँभाई आदि, छल करके दिखाये गये हैं भुजा, वाल, आधे हाथ, कुचा जिसमें ऐसा गोपियोंके हावभावको देखके किसीक ललित गोपीको बहुत कालतक मनमें चिंतवन करतेहुए मुग्ध मनोहर शृंगाररसे तरुण श्रीकृष्ण भगवान् तुह्मारे दुःखको हरो ॥ ३ ॥

इतिश्रीगीतगोविंदस्य रसिकप्रियानाम भाषाटीकायां द्वितीयः सर्गः समाप्तः ॥

## अथ तृतीयसर्गः प्रारभ्यते ।

अब तीसरा सर्ग प्रारंभ होताहै—

एवं राधायाः विरहमुक्त्वा कृष्णस्यापि विरहव्यथां तस्यामाह—

**श्लोकः ॥ कंसारिरपि संसारवासनाबन्धशृंखलाम् ॥**
**राधामाधाय हृदये तत्याज व्रजसुन्दरीः ॥ १ ॥**

सं० टी०—कंसेति । कंसारिरपि कृष्णोपि राधां हृदये मनसि आधाय स्थाप्य व्रजसुंदरीर्गोपीस्तत्याज त्यक्तवान् । कीदृशीं राधां संसारे वासना संस्कारस्तस्या बंधाय शृंखलां निगडरूपाम् । सौंदर्यवतीर्बह्वीरपि तत्याजेति राधायां कृष्णस्यानुरागातिशयो ध्वनितः ॥ १ ॥

भा० टी०—श्रीकृष्ण भी संसारकी वासनाके बंधनके वास्ते बेड़ीरूप राधाजीको हृदयमें स्थापित करके अन्यगोपियोंको त्यागत भये ॥ १ ॥

पुनः किंकृतवान्—

**श्लोकः ॥ इतस्त स्तामनुसृत्य राधिकामनंग-**
**बाणव्रणखिन्नमानसः ॥ कृतानुतापः स कलिंद-**
**नंदिनीतटांतकुंजे निषसाद माधवः ॥ २ ॥**

सं० टी०—इतस्तत इति । स माधवः कलिंदनंदिन्याः यमुनायास्तटांत-कुंजे तीरलतागृहे निषसाद स्थितवान् । किंकृत्वा इतस्ततः अनेकस्थानेषु तां राधिकां अनुसृत्यान्वेष्य । कीदृशः अनंगबाणव्रणेन कामशरक्षतेन खिन्नं दीनं मनो यस्य । कृतोनुतापः पश्चात्तापो येन सः ॥ २ ॥

भा० टी०—वह श्रीकृष्ण तिस राधाजीको जहां तहां ढूंढके कामदेवके बाणकृत घावसे दुःखित चित्त हुए और पिछताते हुए यमुनाजीके तटके समीप कुंजमें बैठगये ॥ २ ॥

अथ सप्तमप्रबंधः गुर्जरीरागेण प्रतिमंठताले गीयते ।

अब सप्तम प्रबंध गुर्जरीरागकरके प्रतिमंठतालमें गाया जाताहै—

कृतानुतापत्वमेवाह गीतेन—

**मामियं चलिता विलोक्य वृतं वधूनिचयेन ॥**
**सापराधतया मयापि न वारितातिभयेन ॥ १ ॥**
**हरिहरि हतादरतया गता सा कुपितेव ॥ ध्रु० ॥**

सं० टी०— मामिति ॥ गीतस्यास्य गुर्जरीरागः प्रतिमंठतालः तयोर्लक्षणं प्राक् कथितम् । हरिहरीति खेदानुकारे सा राधा हतादरतया हतबहुमानत्वेन कुपितेव कोपं प्राप्तेव गता अन्यस्थाने गता । ननु सा कुपिता त्वया कथं ज्ञाता तत्राह । मां कृष्णं वधूनिचयेन गोपीसमूहेन वृतं वेष्टितं विलोक्य चलिता इतो गता इति भिन्नैव वाक्यरचना । तर्हि सा गच्छंती त्वया किं न निवारिता तत्राह । मयापि कृष्णेनापि सापराधतया कृतापराधत्वेन हेतुना अतिभयेन न वारिता । यद्वा कथंभूतेन मया अतिभयेनातिशायितं भयं यस्येति ॥ १ ॥

भा० टी—हरिहरि, बड़ा खेद है कि वह ( राधा ) मुझको गोपीगणोंसे वेष्टित हुएको देखके निरादरी हुई क्रुधित हुईकी तरेह अन्यजगह चलीगई यह चलीजाती हुई मैने भी अपराधके अत्यन्तभयसे नहीं वर्जी ॥ १ ॥

**किं करिष्यति किं वदिष्यति सा चिरं विरहेण ॥**
**किं जनेन धनेन किं मम जीवितेन गृहेण ॥ २ ॥**

सं० टी०—किं करिष्यतीति । सा राधा चिरं विरहेण चिरकालं मद्वियोगेन किं करिष्यति विरहतापशांत्यर्थं कमुपायं करिष्यतीत्यर्थः । किं वदिष्यति । ननु एतावता तस्यामेव को वा ग्रहः अन्यगोपीजनस्य धनादिना चित्तव्यावर्तनं कर्तव्यं तत्राह । तां राधां विना मम जनेन लोकेन किम् । तद्वियोगेन सर्वजनपरित्यागात् धनेन किं ननु धनं विना गृहसौख्यं न स्यात्तत्राह गृहेण किं प्रयोजनं न किमपि तद्वियोगेन वनवासांगीकारात् । ननु सुखास्पदं गृहं

विना सुखं न स्यात्तत्राह मम सुखेन किम् । तां विना सर्वं निष्फलमित्यर्थः । सैव मे सुखरूपेति भावः ॥ २ ॥

भा० टी०–वह (राधा) बहुतकाल मेरे वियोगकरके क्या करेगी? (मुझको) क्या कहैगी? मेरे अन्य जनकरके क्या है? धनसे क्या है? जीवनसे (और) घरसे क्या है? ॥ २ ॥

चिंतयामि तदाननं कुटिलभ्रू रोषभरेण ॥ शो-
णपद्ममिवोपरि भ्रमताकुलं भ्रमरेण ॥ ३ ॥

सं० टी०–चिंतयामीति । अहं तस्याः राधायाः आननं मुखं चिंतयामि स्मरामि । कीदृशमाननं रोषभरेण क्रोधातिशयेन कुटिले वक्रे भ्रुवौ यत्र । किमिव उपरि भ्रमता भ्रमरेण आकुलं व्याप्तं शोणपद्ममिव । अत्र रोषारुणे मुखे शोणपद्मसादृश्यं बोध्यम् । वारंवारं रोषाद्वक्रीभवंत्योर्भ्रुवोर्भ्रमद्भ्रमरोपमा बोध्या ॥ ३ ॥

भा० टी–(मैं) अत्यंत क्रोधसे टेढी भृकुटियोंवाले ऊपर फिरते हुए भ्रमरसे जैसे लाल कमल व्याप्त होरहा है तैसे व्याप्तहुए तिस राधाके मुखको चिंतवन करताहूं ॥ ३ ॥

तामहं हृदि संगतामनिशं भृशं रमयामि ॥
किं वनेऽनुसरामि तामिह किं वृथा विलपामि ॥ ४ ॥

सं० टी०–तामिति । अहं हृदि संगतां राधां अनिशं वारंवारं भृशमतिशयेन रमयामि क्रीडयामीतिभावः । इह वने तां राधां किमनुसरामि हृदि संगतत्वादेव वृथा व्यर्थमेव किं विलपामि विलापं करोमि ॥ ४ ॥

भा० टी०–मैं तिसको हृदयमें प्राप्तहुईको वारंवार बहुतसी रमण क्रीड़ा करताहूं (इसलिये) यहां वनमें तिसको क्या ढूंढूं (और) क्या वृथा विलाप करूं ॥ ४ ॥

हृदि संगतां तां प्रत्याह–

तन्वि खिन्नमसूयया हृदयं तव कलयामि ॥ त-
न्न वेद्मि कुतो गतासि न तेन तेऽनुनयामि ॥ ५ ॥

सं० टी०–तन्वीति । हे तन्वि असूयया असहिष्णुत्वेन दुःखितं तव हृदयं आकलयामि तर्कयामि तत्तस्मादहं न वेद्मि न जाने कुतः कुत्र गता-

सीति तेन कारणेन ते तुभ्यं न अनुनयामि न प्रसादयामि । "क्रियार्थोपपदस्ये" ति चतुर्थी ते इति ॥ ५ ॥

भा० टी०—हे सूक्ष्म अंगवाली राधे! असूयासे अर्थात् तुम्हारा आदर न किया औरोंका किया इस बातके न सहनेसे दुःखित हुए तेरे हृदयको विचार रहाहूं इसीवास्ते मै नहीं जानता कि कहां चली गई है इसीलिये तेरे वास्ते संग २ गमनकरके, नहीं प्रसन्न करताहूं ॥ ५ ॥

**दृश्यसे पुरतो गतागतमेव मे विदधासि ॥**
**किं पुरेव ससंभ्रमं परिरंभणं न ददासि ॥ ६ ॥**

सं० टी०—दृश्यस इति । हे राधे त्वं मम पुरतः अग्रे गतागतं गमनागमनमेव विदधासि करोषीति दृश्यसे । तर्हि पुरेव पूर्ववत् ससंभ्रमं सवेगं परिरंभणमालिंगनं किं केन कारणेन न ददासि । विरहिणो हि चित्तानुषंगात्सर्वतस्तामेव पश्यंति ॥ ६ ॥

भा० टी०—हे राधे! तुम, मेरे आगे उलटी सुलटीही फिरतीहो ऐसे दीखता है (फिर) पहलेकी तरहही वेगसहित आलिंगन क्यों नहीं देती ॥ ६ ॥

**क्षम्यतामपरं कदापि तवेदृशं न करोमि ॥**
**देहि सुंदरि दर्शनं मम मन्मथेन दुनोमि ॥ ७ ॥**

सं० टी०—क्षम्यतामिति । हे सुंदरि पूर्वकृतमपराधं क्षम्यतां अपरमीदृशं तवापराधं कदापि न करोमि न करिष्यामि अत एव मम दर्शनं देहि । यत अहं मन्मथेन कामेन दुनोमि पीडामनुभवामि ॥ ७ ॥

भा० टी०—हे सुंदरि! पहले कियेहुए अपराधको क्षमा कीजिये अन्य ऐसा तुम्हारा कभी भी नहीं करूंगा हे सुंदरि! मुझको दर्शन दो मैं कामदेवसे पीडित होताहूं ॥ ७ ॥

**वर्णितं जयदेवकेन हरेरिदं प्रणतेन ॥**
**किंदुबिल्वसमुद्रसंभवरोहिणीरमणेन ॥ ८ ॥**
**इति श्रीगीतगोविंदे सप्तमः प्रबंधः ॥**

सं० टी०—वर्णितामिति । जयदेवकेन स्वार्थे कः । इदं गीतं वर्णितम् । कीदृशेन जयदेवकेन हरेः प्रणतेन कृष्णस्याराधनपरेण । पुनः कीदृशेन

किंदुबिल्वं जयदेवकुलं तदेव समुद्रस्तस्मात्संभवो यस्य एतादृशो रोहिणी रमणश्चंद्र इव । यथा सागरादुत्पन्नश्चंद्रस्तथा किंदुबिल्वोत्पन्नो जयदेव इति । यद्वा किंदुबिल्वं शासनम् ॥ ८ ॥

भा० टी०—श्रीकृष्णके आराधनमें तत्पर हुए (और) किंदुबिल्व नामवाले वंशरूप समुद्रमें चंद्रस्वरूप जयदेवकविनें यह गीत, वर्णन किया है ॥ ८ ॥

इति श्रीगीतगोविंदस्य रसिकप्रियानामभाषाटीकायां सप्तमः प्रबंधः समाप्तः ॥ ७ ॥

इदानीं काम एव मे दुःखं प्रयच्छतीति तमुपालंभगोचरं करोमीत्याशयेनाह—

श्लोकः ॥ हृदि बिसलताहारो नायं भुजंगमनायकः
कुवलयदलश्रेणी कंठे न सा गरलद्युतिः ॥ मलयजरजो नेदं भस्म प्रियारहिते मयि प्रहर न हरभ्रांत्यानंग क्रुधा किमु धावसि ॥ १ ॥

सं टी०—हृदीति । हे अनंग त्वं मयि हरभ्रान्त्या महादेवभ्रमेण न प्रहर मा प्रहारं कुरु । क्रुधा कोपेन किमु किमिति धावसि मारयितुं धावनं करोषि । कीदृशे मयि प्रियारहिते राधावियोगिनि । सर्वदा प्रियायुक्तोऽहं त्वधुनाप्रियारहित इति मयि हरभ्रमो न युक्त इति भावः । हरभ्रांतिं परिहरति हे काम मम हृदि बिसलतायाःहारोमृणाललताया हारस्तद्विरहजन्यसंतापशांत्यर्थं धृतः नायं भुजंगमनायकः शेषः । इयं मे कंठे कुवलयदलानां नीलोत्पलानां श्रेणी पंक्तिः शैत्यायधृता न तु सा गरलद्युतिर्हालाहलदीप्तिः । इदं मलयजरजश्चंदनलेपः सर्वांगे तापशांत्यर्थं धृतः न तु भस्म विभूतिः ॥ १ ॥

भा० टी०—हे कामदेव ! प्रियाके वियोगवाले मेरेविषे शिवजीकी भ्रांतिकरके मत प्रहार कर क्रोधकरके क्या मारनेको दौड़तेहो हृदयमें कमललताका हार है यह शेष नाग नहीं है, कंठमें नीले कमलोंकी पंक्ति ( शीतलताके वास्ते धारण की है ) यह विषकी कांति नहीं है यह चंदनका लेप है विभूति ( भस्म ) नहीं है ॥ १ ॥

पुष्पसायकत्वेन कामः प्रसिद्धोऽतःइमान् चूतमंजरीरूपानेव बाणान् धनुष्यारोप्य मां ताडयिष्यतीति शंकया पुनरपि कामायैव दैन्यं करोति—

श्लोकः ॥ पाणौ मा कुरु चूतसायकममुं मा चापमा-
रोपय क्रीडानिर्जितविश्व मूर्छितजनाघातेन किं पौ-
रुषम् ॥ तस्या एव मृगीदृशो मनसिज प्रेंखत्कटाक्षा-
निलज्वालाजर्जरितं मनागपि मनो नाद्यापि संधु-
क्षते ॥ २ ॥

सं० टी०—पाणाविति । हे क्रीडानिर्जितविश्व क्रीडया लीलया जितं भुवनं येन सः । अमुं चूतसायकं आम्रपुष्पबाणं पाणौ हस्ते मा कुरु चापं धनुःमारोपय सशरं मा कुरु । हस्तेपि चेत्करोषि तर्ह्यमुं सायकं मा संधेहीत्यर्थः । हेमनासिज मदन यतः मूर्च्छितस्य मूर्च्छां प्राप्तस्य मादृशजनस्याघातेन पीडया किं ते पौरुषं कस्तव पुरुषार्थः न किमपीत्यर्थः । मूर्च्छितत्वे कारणमाह । तस्य एव मृगीदृशो हरिणीनयनायाः । तस्या एवेति विरहाधिक्येन राधानामग्रहणाशक्तिः प्रतिपाद्यते । प्रेंखंतश्चलंतः कटाक्षा एवानलाः वह्नयस्तेषां श्रेण्या पंक्त्या जर्जरितं खंडखंडीभूतं मम मनः मनागपि स्वल्पमपि नाद्यापि संधुक्षते स्वस्थं न भवति । क्वचित्कटाक्षाशुगेतिपाठः तदा कटाक्षा एवाशुगा बाणाः ॥ २ ॥

भा० टी०—हे क्रीड़ासे विश्वको जीतनेवाले काम ! इस आम्र वृक्षके पुष्परूपी बाणको हाथमें मत कर और धनुषको मत चढ़ा ( क्योंकि ) मूर्च्छित जनोंके मारनेसे क्या पुरुषार्थ है -हे कामदेव ! तिसै ही मृगी सरीखे नेत्रोंवाली ( प्रिया ) के चलतेहुए कटाक्षरूपी अग्नियोंकी पंक्तियोंसे खंडित हुआ ( मेरा ) मन स्वल्प भी अबतक नहीं स्वस्थ भया है ॥ २ ॥

ननु तत्कटाक्षादिचिंतनादेव तव दुःखं भवति मदनस्य तर्हि कोपराधस्तत्राह—

श्लोकः भ्रूपल्लवो धनुरपांगतरंगितानि बाणा गुणः श्रव-
णपालिरिति स्मरेण ॥ तस्यामनंगजयजंगमदेवताया-
मस्त्राणि निर्जितजगंति किमर्पितानि ॥ ३ ॥

सं० टी०—भ्रूपल्लवइति । इतीत्थंप्रकारेण स्मरेण कामेन तस्यां राधायां अस्त्राणि अर्पितानि स्थापितानि किं तर्कयामि किं वितर्के । नन्वस्त्राणि वीरेण

स्वहस्ते स्थापयितुमुचितानि नत्वन्यत्रेत्याह । निर्जितानि जगंति यैस्तानि तै रेवास्त्रैर्जगत्त्रयं जित्वा तत्र स्थापितानीति भावः । तर्ह्यन्यत्र किं स्थापितानीत्याह । अनंगस्य कंदर्पस्य जये त्रैलोक्यविजये जंगमदेवतायां गमनशीलदेवतारूपायां । इतीति किं । भ्रूपल्लवो भ्रूलता तदेव धनुः अपांगतरंगितानि कटाक्षनिरीक्षणानि एव बाणाः श्रवणपालिः कर्णप्रदेश एव गुणः प्रत्यंचा ॥ ३ ॥

भा० टी०—कामदेवनें जीत लियाहै जगत् जिन्होंसे ऐसे अपने शस्त्रोंको कामदेवकी त्रैलोक्य विजयमें चलनेवाली देवतारूप तिस राधाविषे ईसप्रकारसे स्थापित कर रक्खेहैं क्या; ऐसी वितर्क करताहूं, कि, भ्रुकुटि धनुष है कटाक्षोंसे देखना एही बाण हैं कानोंकी पाली प्रत्यंचा, धनुषकी रज्जु है ॥ ३ ॥

अधुना मनोविषयीकृतां राधां प्रति स्वीयं दुःखमाह—

**श्लोकः ॥ भ्रूचापे निहितः कटाक्षविशिखो निर्मातु मर्मव्यथां श्यामात्मा कुटिलः करोतु कबरीभारोपि मारोद्यमम् ॥ मोहं तावदयं च तन्वि तनुतां बिंबाधरो रागवान् सद्वृत्तस्तनमंडलस्तव कथं प्राणैर्मम क्रीडती ॥४॥**

सं० टी०—भ्रूचाप इति । हेतन्वि कृशांगि भ्रूचापे भ्रुवावेव चापो धनुस्तत्र निहितः अर्पितः कटाक्षविशिखः कटाक्षबाणः मर्मव्यथां मर्मपीडां तावन्निर्मातु करोतु । विशिखस्य मर्मव्यथाजनकत्वं युज्यत एवेतिभावः । अनु च श्यामात्मा श्यामवर्णः कुटिलः वक्राकारः कबरीभारोपि केशसमूहोपि मारोद्यमं कामौन्नत्यं तावत्करोतु । योंतर्मलिनः कुटिलश्च भवति सोन्यमारणाय यत्त एवेति सूचितम् । अयं च बिंबाधरः बिंबोष्ठः मोहं तनुतां विस्तारयताम् । कथंभूतो बिंबाधरः रागवान् लोहितवर्णः रागिणो विषयिणः मोहो ममत्वं युज्यत एव सद्वृत्तः साधुवर्तुलः तव स्तनमंडलः मम प्राणैः कथं क्रीडति । ये सद्वृत्ताः सन्मार्गप्रवर्तकास्ते तु परप्राणघातका न भवंति । विरोधनामालंकारः ॥ ४ ॥

भा० टी०—हे सूक्ष्म अंगवाली ! भ्रुकुटिरूप धनुष पर चढाया हुआ कटाक्ष स्वरूपी बाण मेरे मर्मकी पीड़ा करो और श्यामवर्णवाला कुटिल ( टेढ़ा ) यह केशोंका समूह

भी[10] मारनेका उद्यम करो और[13] यह बिंबोष्ठ[15] ( होठ ) प्रथमही मोहको बढ़ाओ क्योंकि, रागवान् ( लालवर्णवाला ) है परंतु, सद्वृत्त ( उत्तम गोल आकारवाला ) तुम्हारे कुचाओंका मंडलभी [23] मेरे प्राणोंके साथ कैसे[25] क्रीड़ा करता है ॥ ४ ॥

**श्लोकः ॥ तानि स्पर्शसुखानि ते च तरला स्निग्धा दृशोर्विभ्रमास्तद्वक्त्रांबुजसौरभं स च सुधास्यंदी गिरां वक्रिमा ॥ सा बिंबाधरमाधुरीति विषयासंगे पि मन्मानसं तस्यां लग्नसमाधि हंत विरहव्याधिः कथं वर्तते ॥ ५ ॥**

सं० टी०—तानीति । तान्येव स्पर्शसुखानि यानि पुरा नायिकासंगमानुभूतानि । एतेन त्वगिंद्रियविषयलाभः । ते च तरलाश्चंचलाः स्निग्धाः प्रेमान्विताः दृशोश्चक्षुषोर्विभ्रमा विलासाः । एतेन रूपं । तदेव वक्त्रांबुजसौरभं वदनकमलसुरभित्वं । एतेन गंधत्वं । स च सुधास्यंदी अमृतद्रवयुक्तः गिरां वचसां यः वक्रिमा वक्रत्वं । एतेन शब्दः सा च बिंबाधरमाधुरी बिंबसदृशौष्ठमाधुर्यं तदेव । एतेन रसः । इत्येवं प्रकारेण विषयासंगेपि तस्या रूपरसस्पर्शादीनां सान्निध्येपि मम मानसं मनस्तस्यां राधायां लग्नसमाधि प्राप्तस्थानं चेद्यदि तदा हंत इतिखेदे विरहव्याधिः व्यथा कथं वर्तते । ध्यानयुक्तस्य योगिनो व्याधिनाशात् ॥ ५ ॥

भा० टी०—जो कि प्रियाके संगमें अनुभव किये हुए हैं, वेही स्पर्शमें सुखदायक हैं और वेही चंचल हैं प्रेमसे संयुक्त हैं और नेत्रोंको विलासकारक हैं और तिस प्रियाकेही मुखकमलकी सुगंधि है और[11] वही अमृत झिरानेवाला है कि जो वचनोंका टेढ़ापनसे कथन है वही बिबोंष्ठोंकी[17] माधुर्य है, इसतरह, विषयासक्तिमें [20] भी तिसै राधाविषे मेरा मन समाधिसे लग रहाहै तौभी हंत, अहो विरहरूपी व्याधि कैसे[26] रहै गईहै क्योंकि ध्यानयुक्त योगीके तो व्याधिका नाशही होताहै ॥ ५ ॥

अधुना कविः सर्गांते भक्तानाशिषयति—

**श्लोकः ॥ तिर्यक्कंठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्गीतस्थानकृतावधानललनालक्षैर्न[14] संलक्षिताः ॥ सं-**

मुग्धं मधुसूदनस्य मधुरे राधामुखेंदौ मृदुस्पंदं पल्लवि-
ताश्चिरं ददतु वः क्षेमं कटाक्षोर्मयः ॥ ६ ॥
इति श्रीकविराज श्रीजयदेवकृते गीतगोविंदे महाका-
व्ये मधुसूदनो नाम सटीकस्तृतीयः सर्गः ॥ ३ ॥

सं० टी०—तिर्यक्कंठेति । मधुसूदनस्य कृष्णस्य कटाक्षोर्मयः कटाक्षदर्शनतरंगाः वः युष्माकं भक्तानां क्षेमं कल्याणं ददतु प्रयच्छंतु । कीदृशाः मधुरे सुन्दरे राधायाः मुखमिंदुरिव तस्मिन् संमुग्धं अव्यक्तं मृदुस्पंदं किंचिच्चलनं च यथा स्यात्तथा पल्लविताः । इंदुदर्शनात्तरंगाः अतीव भवंतीति कटाक्षाणां तरंगसाम्यं । नन्वन्यासु पश्यंतीषु कथं राधामुखचन्द्र एव पल्लविता ऊर्मयः अत-आह । वंशादुच्चरत्सु वेणोर्निर्गच्छत्सु गीतस्थानेषु गानपदेषु कृतावधानैर्दत्तमनोभिर्ललनाक्षैर्गोपांगनासहस्रैर्न संलक्षिताः न ज्ञाताः । कथंभूतस्य मधुसूदनस्य तिर्यग्वक्रः कंठो यस्य विलोलश्चंचलो मौलिर्मस्तकः किरीटो वा यस्य तरलश्चंचल उत्तंसः अवतंसो यस्य सः पश्चात्कर्मधारयः । लक्षपदं बहुत्वोपलक्षकं । मुग्धोहरिर्विरहीत्यर्थः ॥ ६ ॥

भा० टी०—तिरछे कंठवाले और चंचल मुकुट तथा कर्णपूर आभूषणवाले श्रीकृष्ण भगवान्के कटाक्षोंकी ऊर्मि ( लहरी ) तुम्हारे अर्थ बहुत कालतक कल्याण दो कैसी लहरियां हैं कि, मनोहर राधाजीके चंद्ररूप मुखपर अप्रकटतासे किंचिच्चलनपूर्वक अत्यंत बढ़ली हैं पुनः कैसी हैं कि, वंशीसे उच्चारण होतेहुए गीतपदोंपर दत्तदृष्टि, और मनवाली लाखों गोपियोंकरके नहीं देखी गयी हैं ॥ ६ ॥

इतिश्री गीतगोविंदस्यरसिकप्रियानाम भाषाटीकायां तृतीयःसर्गः ॥ ३ ॥

---

## अथ चतुर्थः सर्गः प्रारभ्यते ।

---

अब चौथा सर्ग प्रारंभ होता है ।

इदानीं राधासखी कृष्णं प्रत्याह—

श्लोकः ॥ यमुनातीरवानीरनिकुंजे मंदमास्थितम् ॥
प्राह प्रेमभरोद्भ्रांतं माधवं राधिकासखी ॥ १ ॥

सं० टी०—यमुनेति । राधिकायाः सखी माधवं कृष्णं वक्ष्यमाणं प्राह उक्तवती । कीदृशं माधवं यमुनायास्तीरे यो वानीरकुंजः वेतसोपलक्षितं लतागृहं तस्मिन् मंदं तूष्णीं आस्थितं आसीनम् । पुनः कीदृशं प्रेम्णा राधायां प्रेमातिशयेन उद्भ्रांतं उद्विग्नचित्तं कथं मयि प्रसादं यास्यतीत्युद्भ्रांतम् ॥ १ ॥

भा० टी०—कोई राधाजीकी सखी यमुनाजीके तीरपर वेतसमूहोंसे युक्त लताकुंजमें चूपके होके बैठेहुए प्रेमके भारसे उन्मने हुए श्रीकृष्णको कहती भई ॥ १ ॥

अथ अष्टमप्रबंधः कर्णाटकरागेण एकतालीताले गीयते.

अब आठवां प्रबंध कर्णाटक रागकरके एकताली तालमें गाया जाता है—

उक्तश्लोकार्थं गीतेनाह—

निंदति चंदनमिंदुकिरणमनुविंदति खेदमधीरम् ॥ व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरम् ॥ सा विरहे तव दीना ॥ माधव मनसिजविशिखभयादिव भावनया त्वयि लीना ॥ ध्रु० ॥

सं० टी०—निंदतीति । अस्य कर्णाटकरागः तल्लक्षणं "कपोलपाणिर्गजदंतपत्रमेकं वहन् दक्षिणकर्णपूरे । संस्तूयमानः सुतचारणौघैः कर्णाटरागः सितनीलकंठः" इति । अत्र गीते विरहोत्कण्ठा वर्णनीया "वासकसज्जा सोत्कण्ठा स्वाधीनभर्तृका तथा ॥ कलहांतरिता चापि विप्रलब्धाभिसारिका । खंडिता प्रोषिता चैव वनिताश्चाष्टसंभृताः" । तत्र विरहोत्कण्ठालक्षणं भरतोक्तं । "यस्याः समुचितेप्याह्नि प्रवासी नैति वल्लभः । सा स्मरानलसंतप्ता विरहोत्कण्ठिता मता" इति । गीतार्थस्तु हे माधव सा राधा तव विरहे सति दीना दुःखिता त्वयि त्वद्विषये भावनया अनुचिंतनेन कामबाणः कृष्णहृदये प्रविश्य स्थितां मां न पीडयिष्यतीति भावनया लीना प्रविष्टा । कस्मादिव मनसिजविशिखभयादिव । केन प्रकारेणेत्याह हेकृष्ण सा राधा चन्दनं निंदति । इन्दुकिरणं चन्द्रदीधितिं अनुलक्षीकृत्य अधीरं अनल्पखेदं विंदति लभते । मलयसमीरं मलयवातं व्यालनिलयं सर्पस्थानं चन्दनवृक्षस्तस्य मिलनेन स्पर्शनेन गरलमिव विषमिव कलयति मन्यते ॥ १ ॥

भा० टी०—हे माधव! वह राधा, तुम्हारे वियोग होनेसे दुःखित हुई कामदेवके बाणके भयसे हो तैसे तुम्हारे विषे भावना करके लीन होरही है ऐसी वह राधा, चंद्रमाका अनुमान करके चंदनकी निंदा करतीहै बहुतसे खेदको प्राप्त होतीहै मलयाचलकी सुगंधित, वायुको सर्पोंके स्थानसे मिलीहुई होनेसे विषकी तरँह मानती है ॥ १ ॥

**अविरलनिपतितमदनशरादिव भवदवनाय विशालम् ॥**
**स्वहृदयमर्मणि वर्म करोति सजलनलिनीदलजालम् ॥ २ ॥**

सं० टी—अविरलेति। हे कृष्ण सा राधा स्वहृदयमर्मणि सजलनलिनीदलजालं सजलकमलिनीपत्रसमूहमेव वर्म तनुत्रं करोति। कस्मैप्रयोजनाय भवदवनाय स्वहृदयस्थितस्य भवतो रक्षणाय। कस्मादिव अविरलं निरंतरं पतितो यो मदनशरः कामबाणस्तस्मादिव। कीदृशं वर्म विशालं विस्तीर्णं। त्वं तस्या हृदये सर्वदा इति भावः ॥ २ ॥

भा० टी०—हे कृष्ण! वह राधा, आपकी रक्षाके वास्ते अपने हृदय मर्मविषे जलयुक्त कमलिनियोंके पत्रसमूहको विशाल वर्म शस्त्रसे शरीरकी रक्षा करनेवाला संजोवा बनातीहै. कैसे कि, तुमको जो अपने हृदयमें स्थापित रखतीहै; इसलिये निरंतर परते हुए कामदेवके बाणसे मानों आपकी रक्षा करतीहै ॥ २ ॥

**कुसुमविशिखशरतल्पमनल्पविलासकलाकमनीयम् ॥**
**व्रतमिव तव परिरंभसुखाय करोति कुसुमशयनीयम् ॥ ३ ॥**

सं० टी०—कुसुमेति। कुसुमशमनीयं पुष्पशय्यां करोति। कीदृशं अनल्पविलासकलाभिर्बहुतरक्रीडाकलाभिः कमनीयं सुंदरं पुष्पशय्या स्वयमेव मनोज्ञा इयं शय्याविरचनाकुशला शय्याभावे पुष्पशय्यां करोतीत्यर्थः। कमिव कुसुम विशिखः कामस्तस्य शराः पुष्पाणि तान्येव तल्पं शय्या तादृशं व्रतमिव शरशय्याशयनरूपं दारुणं व्रतमिति भावः। किमर्थं व्रतमित्यत आह तव परिरंभसुखाय आलिंगनसुखं प्राप्तुमित्यर्थः ॥ ३ ॥

भा० टी०—और, तुम्हारे मिलापके सुखके वास्ते पुष्पोंकी शय्या बनातीहै कैसी बनाती है कि, बहुतसी क्रीडाओंकी कलाओंसे आपही सुंदर है. पुष्पशय्याका हेतु यह है कि, ये पुष्प कामदेवके बाण है इसलिये यह शराशय्याहै मानों ऐसा वीर व्रत करती है॥ ३॥

**वहति चलितविलोचनजलधरमाननकमलमुदारम् ॥**
**विधुमिव विकटविधुंतुददंतदलनगलितामृतधारम् ॥ ४ ॥**

सं० टी०—वहतीति । सा राधा उदारं मनोज्ञं आननकमलं वहति धारयति । कीदृशं चलितं उच्छ्वासितं यद्विलोचनजलं नेत्राश्रु तद्धारयतीति । कमिव विधुमिव कीदृशं विधुं विकटेन दारुणेन महता विधुंतुदस्य राहोर्दंतेन दलनाद्गलिताऽमृतधारा यस्मात् ॥ ४ ॥

भा० टी०—वह राधा, ऊंचे श्वाससे आये हुए आंसुवोंके जलको धारण करनेवाले, और उदार आपके मुखकमलको धारण करती है कैसेकि, मानों दारुण राहुके दांतसे पीडित होनेसे चली गई है अमृतकी धारा जिसकी ऐसे चंद्रमाको धारण करती हो तैसे ॥४॥

**विलिखति रहसि कुरंगमदेन भवंतमसमशरभूतम् ॥**
**प्रणमति मकरमधो विनिधाय करे च शरं नवचूतम् ॥ ५ ॥**

सं० टी०—विलिखतीति । हेकृष्ण सा राधा असमशरभूतं कंदर्पस्वरूपं भवंतं त्वां रहसि एकांते कुरंगमदेन मृगमदेन कस्तूरिकया विलिखति अधः कामरूपस्य भवतोधस्तान्मकरं कामवाहनं विनिधाय कृत्वा करे हस्ते नवचूतं नूतनाम्ररूपं शरं बाणं च विनिधाय संस्थाप्य प्रणमति । पूजानंतरं प्रणामो युज्यत एव । मकरस्य ध्वजत्वे प्रसिद्धे वाहनत्वेपि न दोषः ॥ ५ ॥

भा० टी०—और, कामदेवस्वरूप आपको एकांत जगहमें कस्तूरीसे लिखती है मूर्ति बनाती है, तुम्हारे नीचे मच्छकी मूर्ति बना और तुम्हारे हाथमें नवीन आम्रको पल्लव बाणरूप कर पीछे प्रणाम करती है ॥ ५ ॥

**प्रतिपदमिदमपि निगदति माधव तव चरणे पतिताहम् ॥**
**त्वयि विमुखे मयि सपदि सुधानिधिरपि तनुते तनुदाहम् ॥ ६ ॥**

सं० टी—प्रतिपदमिति । हेकृष्ण सा राधा प्रतिपदं प्रतिक्षणं इदमपि निगदति । इदं किं हेमाधव हे कृष्ण तव चरणे अहं पतिता । किमित्यत आह त्वयि विमुखे पराङ्मुखे सति मयि सपदि तत्क्षणं सुधानिधिरपि चन्द्रोपि तनुदाहं शरीरपीडां तनुते विस्तारयति यतश्चन्द्रोप्येवं कुरुते अतस्तव चरणे पतिता ॥ ६ ॥

भा० टी०–हे[1] कृष्ण! वह राधा, क्षणक्षणमें यहभी[4] कहती है कि हे कृष्ण! मैं[6] तुम्हारे चरणमें परी हुई हूं और तुम विमुख हुए पीछे [2]मेरे विषे शीघ्रही चंद्रमा भी[15] शरीरके संतापको बढ़ाता है ॥ ६ ॥

**ध्यानलयेन पुरः परिकल्प्य भवंतमतीव दुरापम् ॥**
**विलपति हसति विषीदति रोदिति[10] चंचति मुंचति तापम् ॥७॥**

सं० टी०–ध्यानेति । हेकृष्ण अतीव दुरापं दूतीद्वारापि दुर्लभं भवंतं ध्यानलयेन चित्तैकाग्र्यविशेषेण पुरोग्रे परिकल्प्य कल्पनां कृत्वा मयि स्नेहं इदानीमपि न करोतीति विलापं करोतीति हसति । तव दर्शनेन विषीदति हास्यानंतरं आनर्थक्यात् । अत एव रोदिति । चंचति स्थानान्तरं गच्छति स्थानांतरे आलिंगनादिकं करिष्यतीति अतएव तापं मुंचति मनस्तापं त्यजति ॥ ७ ॥

भा० टी०–हे कृष्ण ! अत्यंत दुर्लभ आपको ध्यान समाधिसे आगे कल्पित करके विलाप करती है हंसती है विषाद करती है रोती[10] है दूसरे स्थानमें जाती है संतापको त्यागती है ॥ ७ ॥

**श्रीजयदेवभणितमिदमधिकं यदि मनसा नटनीयम् ॥**
**हरिविरहाकुलबल्लवयुवतिसखीवचनं पठनीयम् ॥ ८ ॥**

**इति श्रीगीतगोविंदे अष्टमः प्रबंधः ॥ ८ ॥**

सं० टी०–श्रीजयदेवेन भणितं कथितं गीतं मनसा चित्तेन अधिकं सातिशयं यदि नटनीयं नृत्तयितव्यं तदा हरिविरहेण कृष्णवियोगेनाकुलाया-बल्लवयुवत्याः राधायाः सखीवचनं गीतरूपं पठनीयम् । श्रीजयदेवगीतेष्विदमःतिशयितव्यमितिभावः ॥ ८ ॥

भा० टी०–जो यदि श्रीजयदेव कविसे कहेहुए गीतको मनसे अधिक नचावना योग्य समझते हो तो यह, कृष्णचंद्रके विरह करके व्याकुल हुई राधाजीकी सखीका वचन कथन पढ़ना योग्य है ॥ ८ ॥

इति श्रीगीतगोविंदस्यरसिकप्रियानाम भाषाटीकायां अष्टमः प्रबंधः ॥ ८ ॥

गीतोक्तमर्थं श्लोकेनाह–

**श्लोकः ॥ आवासो विपिनायते प्रियसखीमालापि जालायते तापोपि श्वसितेन दावदहनज्वालाक**

**लापायते ॥ सोपि त्वद्विरहेण हंत हरिणीरूपायते हा**
**कथं कंदर्पोपि यमायते विरचयञ्छार्दूलविक्रीडितम् ॥ १ ॥**

सं॰ टी॰—आवास इति। हेकृष्ण हंतेति खेदानुकारे सा राधापि त्वद्विरहेण भवद्वियोगेन हरिणीरूपायते मृगीरूपमिवाचरति । कथमित्यत आह। आवासो गृहं विपिनायते वनमिवाचरतीति । त्वद्विरहात् प्रियसखीमालापि सखीसमूहोपि स्वेच्छागमननिवारकतया जालायते जालमिवाचरति । तापोपि देहदाहोपि श्वसितेन श्वासोच्छ्वासेन दावदहनज्वालाकलापायते अरण्यवह्निज्वाला परंपरेवाचरति । कंदर्पोपि कथं यमायते यम इवाचरति । हाशब्दः स्वात्मनो दुःखाधिक्यसूचनार्थः । कीदृशःकंदर्पः शार्दूलविक्रीडितं व्याघ्रचेष्टितं विरचयन् मृगीमरणं शार्दूलादेव भवति ॥ १ ॥

भा॰ टी॰—हे कृष्ण! हंत अर्थात् बड़ा भारी खेद है कि वह राधाभी तुम्हारे वियोगसे मृगीसरीखे रूपका आचरण कर रही है कैसे कि घर बँन सरीखा है प्रियसखियोंका समूहभी जाल सरीखा मालूम होता है देहका संतापभी ऊंचेश्वास लेनेसे दावानल अग्निकी तरह पीड़ा दे रहा है. हा कष्ट है कि सिंह व्याघ्रादिकोंके चेष्टित करनेवाला कामदेवभी कैसे धर्मराजकी तरह आचरण करता है ॥ १ ॥

अथ नवमः प्रबन्धो देशाखरागेण एकतालीताले गीयते ।

अब नवमः प्रबंध देशाख रागकरके एकताली तालमें गाया जाता है-

इदानीं सखी पुनरपि राधाया दुःखचेष्टितं गीतेनाह—

**स्तनविनिहितमपि हारमुदारम् ॥ सा मनुते कृशतनुरिव भारम् ॥ १ ॥ राधिका विरहे तव केशव ॥ ध्रु॰ ॥**

सं टी॰—स्तनेति । गीतस्यास्य देशाखरागः एकतालीतालः । तल्लक्षणं "आस्फोटनाविष्कृतरोमहर्षो नियुद्धसन्नद्धविशालबाहुः "हे केशव कृष्ण तव विरहे जाते सति सा राधा एवं चेष्टते । कीदृशमित्यतआह कृशतनुः विरहकृश शरीरस्तनविनिहितमपि स्तनयोः स्थापितं उदारं बहुमूल्यं हारमपि भारमिव मनुते ॥ १ ॥

भा॰ टी॰—हे कृष्ण! तुम्हारे वियोग होनेसे दुबले शरीरवाली वह राधा कुचाओंपर स्थापित कियेहुएको भी बहुत मूल्यवाले हारको भार समान मानती है ॥ १ ॥

**सरसमसृणमपि मलयजपंकम् ॥**
**पश्यति विषमिव वपुषि सशंकम् ॥ २ ॥**

सं० टी०—सरसमिति । सा राधा सरसमसृणं सार्द्रचिक्कणद्रवरूपं मलयज पंकमपि चन्दनलेपमपि वपुषि सशंकं विषमिव पश्यति तत्र विरहात् ॥ २ ॥

भा० टी०—वह राधा, गीले चिकने चंदनके लेपकोभी शरीरपर शंकासहित विषकी तरह देखती है ॥ २ ॥

**श्वसितपवनमनुपमपरिणाहम् ॥**
**मदनदहनमिव वहति सदाहम् ॥ ३ ॥**

सं० टी०—श्वसितेति । सा राधा श्वसितपवनं निश्वासवायुं मदनदहनमिव कामाग्निमिव वहति धारयति वायोरपि दाहकत्वात् । कीदृशं अनुपमः उपमारहितः परिणाहो विशालता यस्य तं अतिदीर्घं सदाहं उष्णत्वाद्दाहयुक्तम् ॥३॥

भा० टी०—और अतुल विस्तारवाले दाहयुक्त श्वासके वायुको कामदेवरूपी अग्निकी तरह धारण करती है ॥ ३ ॥

**दिशिदिशि किरति सजलकणजालम् ॥**
**नयननलिनमिव विगलितनालम् ॥ ४ ॥**

सं० टी०—दिशीति । सा राधा सजलकणजालं अश्रुबिंदुसमूहसहितं नयनमेव नलिनं पद्मं दिशि दिशि भवद्दर्शनवांछया विकिरति क्षिपति । कीदृशमिव विगलितदण्डमिव सर्वतः पश्यतीत्यर्थः ॥ ४ ॥

भा० टी०—वह राधा आंशुवोंके जलसमूहयुक्त हुए अपने नेत्रकमलोंको मानों इनका दंड दूर होगया हो, नाली टूटे कमलपुष्पोंकी तरह आपके दर्शनकी इच्छासे दिशादिशामें फेंकती है ॥ ४ ॥

**नयनविषयमपि किसलयतल्पम् ॥**
**कलयति विहितहुताशविकल्पम् ॥ ५ ॥**

सं० टी०—नयनेति । सा राधा नयनविषयमपि नेत्रगोचरमपि किसलयतल्पं पल्लवशयनीयं न कलयति नजानाति । कथंभूतं विहितः कृतः हुताशस्याग्नेः विकल्पः संशयो यत्र तं अतिसंतापजनकत्वात् तादृशं गणयति मनुते ॥ ५ ॥

भा० टी०-( और ) नेत्रोंके आगे प्रत्यक्ष हुई भी पत्तोंकी शय्याको अग्निका विकल्प ( तर्कना ) करके मानती है ॥ ५ ॥

त्यजति न पाणितलेन कपोलम् ॥
बालशशिनमिव सायमलोलम् ॥ ६ ॥

सं० टी०—त्यजतीति । सा पाणितलेन हस्ततलेन कपोलं गंडस्थलं न त्यजति शंकितत्वात् । कमिव सायं संध्याकाले अलोलं निश्चलं बालशशिनमिव द्वितीयाचंद्रमिव । हस्तेनाच्छादितत्वात् संध्यासाम्यम् ॥ ६ ॥

भा० टी०—अपने हाथसे आच्छादित हुए कपोलको नहीं छोड़ती है संध्यासमयमें चंचलतारहित द्वितीयाके चंद्रमाहीको मानों आच्छादित कर रही है ॥ ६ ॥

हरिरिति हरिरिति जपति सकामम् ॥
विरहविहितमरणेव निकामम् ॥ ७ ॥

सं० टी०—हरिरिति । सा निकाममतिशयेन सकामं साभिलाषं हरिर्हरिरिति जपति कथंभूतेव विरहेण त्वद्वियोगेन विहितं कृतं मरणं यस्याः सेव। अन्येपि मरणे हारिरिति मंत्रं जपंति ॥ ७ ॥

भा० टी०—आपके वियोगसे किया है मरण जिसने मानों ऐसी ( वह राधा ) अत्यंत अभिलाषासे सहित हरि हरि ऐसे जपती है ॥ ७ ॥

श्रीजयदेवभणितमितिगीतम् ॥ सुखयंतु केशवपदमुपनीतम् ॥ ८ ॥
इति श्रीगीतगोविंदे नवमः प्रबंधः ॥ ९ ॥

सं० टी०— श्रीजयदेवोक्तं इति पूर्वगीतं केशव एव पदं विश्रांतिस्थानं यस्य तत् भक्तं सुखयतु । कीदृशं उपनीतं उपास्थितीकृतम् ॥ ८ ॥

भा० टी०—श्रीजयदेव कविसे कहाहुआ यह गीत समीपमें प्राप्त भगवान्‌के समीप स्थिति करनेवाले भक्तजनको सुख करो ॥ ८ ॥

इति श्रीगीतगोविंदस्य रसिकप्रियानाम भाषाटीकायां नवमः प्रबंधः ॥ ९ ॥

अधुना सा तव विरहेणावश्यं मृगयाति इति सूचयन् शार्दूलविक्रीडित वृत्तेन श्लोकेनाह—

श्लोकः ॥ सा रोमांचति सीत्करोति विलपत्युत्कंपते ताम्यति
ध्यायत्युद्भ्रमति प्रमीलति पतत्युद्याति मूर्छत्यपि ॥
एतावत्यतनुज्वरे वरतनुर्जीवेन्न किं ते रसात्
स्ववैद्यप्रतिमप्रसीदसि यदि त्यक्तोन्यथा हस्तकः ॥ १ ॥

सं० टी०—सारोमांचतीति । हे स्ववैद्यप्रतिम अश्विनीकुमारतुल्य यदि त्वं प्रसीदसि प्रसन्नो भवासि वरतनुः सुकुमारांगी सा राधा एतावति अतनुज्वरे साति तव रसात्किन्न जीवेत् अपि तु जीवेदेव । रसः श्रृंगारः औषधं च अन्यथा प्रसन्नताभावे हस्तकः हस्तालंभस्त्यक्तः । ज्वरे साति एते व्याधयो भवंति ते तस्यां वर्तंत इत्याह सा राधा रोमांचति सरोमांचा भवतीत्यर्थः । सीतकरोति सीत्कारशब्दं करोतीत्यर्थः । विलपति विलापं करोति । उत्कंपते सकंपा भवति । ताम्यति ग्लानियुक्ता भवति । ध्यायति चिंतयति । उद्भ्रमति उच्चैर्भ्रांता भवति । प्रमीलति नेत्रनिमीलनं करोति । पतति शय्यादौ गच्छाति । उद्याति उच्चैर्गच्छति । मूर्छति मूर्च्छां प्राप्नोति । ज्वरिणः पुरुषस्य एतावद्भवतीति ॥ १ ॥

भा० टी०—हे अश्विनीकुमारोंके समान वैद्य! वह राधा रोमांचयुक्त होती है, सीत्कार शब्द करती है, विलाप करती है, कांपती है, ग्लानियुक्त होती है, चिंता करती है, उच्च प्रकारसे भ्रमती है, नेत्र मींचती है, शय्यादिकोंपर पड़ती है, उच्च प्रकारसे गमन करती है, मूर्च्छित भी होती है, ऐसे प्रकारके अत्यंत ज्वरमें जो यदि तुम प्रसन्न होते हो (तो) तुम्हारे रसकरके उत्तम शरीरवाली यह राधा क्यों नहीं जीवै (किंतु अवश्यही जीव सक्ती है) तुम प्रसन्न नहीं हो इसीसे उसका हाँथ पकरना छोड़ दिया है ॥ १ ॥

पुनरुपेंद्रवज्रावृत्तेनाह—

श्लोकः ॥ स्मरातुरां दैवतवैद्यहृद्य त्वदंगसंगामृतमात्रसाध्याम् ॥
विमुक्तबाधां कुरुषे न राधामुपेंद्रवज्रादपि दारुणोसि ॥ २ ॥

सं० टी०—स्मरातुरामीति । हे दैवतवैद्यवत् अश्विनीकुमारवत् हृद्य सुंदर हे उपेंद्र इंद्रानुज त्वं राधां विमुक्तबाधां त्यक्तपीडां न कुरुषे अतो वज्रात्कु-

लिशादपि दारुणोसि अधिकाविषमोसि । स्मरातुरां कामार्ता पुनः कीदृशीं त्वदंगसंगस्तवशरीरसम्बंध एवामृतं तन्मात्रेण साध्यां प्रतिकार्याम् ॥ २ ॥

भा० टी०—हे[1] अश्विनीकुमारवत् सुंदर वैद्य ! तुम्हारे अंगके संगरूप अमृतसे साध्य अच्छी होनेवाली, रोगवती राधाको स्मरण करो तुम राधाको बाधासे रहित नहीं करते हो ( इसलिये ) हे वामन ! वज्रसे भी[11] कठोर हो[13] ॥ २ ॥

एवंविधापि राधा त्वच्चिंतनेनैव जीवतीत्याह—

**श्लोकः ॥ कंदर्पज्वरसंज्वराकुलतनोराश्चर्यमस्याश्चिरं**
**चेतश्चन्दनचंद्रमःकमलिनीचिंतासु संताम्यति ॥**
**किंतु क्षांतिवशेन शीतलतनुं त्वामेवमेकं प्रियं**
**ध्यायंती रहसि स्थिता कथमसौ क्षीणा क्षणं प्राणिति ॥ ३ ॥**

सं० टी०—कंदर्पेति । हे कृष्ण अस्या राधायाश्चेतो मनः चिरं चिरकालं चन्दनस्य चन्द्रमसः कमलिन्याश्च चिंतासु स्मरणेष्वपि सन्ताम्यति ग्लानिं प्राप्नोति । इदं महदाश्चर्यं । कीदृश्याः अस्या कन्दर्पज्वरेण तापेन यः संज्वरः पीडा तेनाकुला चंचला तनुः शरीरं यस्यास्तस्याः । किंतु रहसि एकांते स्थितासौ राधा त्वामेवं एकं असाधारणं प्रियं वल्लभं ध्यायती । क्षणं मुहूर्तं क्षांतिवशेन क्षांत्यावृततया । त्वत्कांतिवशेनेतिपाठः । तदा अस्मिन्क्षणेनायातः क्षणांतरे आगमिष्यतीति अनुरागेण कथं प्राणिति जीवतीति । कथमिति प्रश्ने । कीदृशी क्षीणा कृशांगी ॥ ३ ॥

भा० टी०—( हे कृष्ण ) कामदेवके ज्वरकी पीड़ासे आकुल शरीरवाली इस राधाका चित्त बहुत कालतक चंदन, चंद्रमा, कमलिनी इन्होंका चिंतवन करनेसेभी ग्लानिको प्राप्त होता है ( यह ) बडा आश्चर्य है परंतु एकांतमें बैठी[10] हुई शीतल शरीरवाले तुमकोही[13] एक प्रियको ध्याती हुई क्षण कालतक क्षमासे युक्त होनेसे यह कृश अंगवाली कैसे[21] जीवती है ॥ ३ ॥

पुनरपि उद्दीपनविभावेन विरहोद्रेकं पुष्पिताग्रावृत्तेनाह—

**श्लोकः ॥ क्षणमपि विरहः पुरा न सेहे नयननिमी-**

**लनखिन्नया यया ते ॥ श्वसिति कथमसौ रसाल-**
**शाखां चिरविरहेण विलोक्य पुष्पिताग्राम् ॥ ४ ॥**

सं टी०—क्षणमिति। हे कृष्ण यया राधया ते वियोगः पुरा पूर्वं क्षणमपि न सेहे न सोढः। कीदृशा राधया नयनयोर्नेत्रयोर्निमीलनेन निरंतरदर्शनघाताच्चक्षुर्निमेषेण खिन्नया दुःखितया। असौ राधा चिरविरहेण तव चिरवियोगेन कथं केन प्रकारेण श्वसिति जीवतीति न ज्ञायते। किं कृत्वा वसंते पुष्पितोग्रभागो यस्यास्तां रसालस्याम्रस्य शाखां विलोक्य दृष्ट्वा ॥ ४ ॥

भा० टी०—आपको देखती देखती हुई नेत्र झपकनसेभी दुःखित हुई जिस राधानें पहले कभी तुम्हारा वियोग क्षणमात्र भी नहीं सहाथा सो वह राधा पुष्पित अग्रभागवाली आम्रवृक्षोंकी डालियोंको देखिकै बहुतकालके वियोग होनेसे कैसे जीवती है ॥ ४ ॥

इदानीं कथोपक्रमं त्यक्त्वा कविर्भक्तानाशिषयति शार्दूलविक्रीडितवृत्तेन—

**श्लोकः॥ वृष्टिव्याकुलगोकुलावनरसादुद्धृत्य गोवर्धनं**
**बिभ्रद्वल्लवसुंदरीभिरधिकानंदाच्चिरं चुंबितः॥**
**कंदर्पेण तदर्पिताधरतटीसिंदूरमुद्रांकितो**
**बाहुर्गोपतनोस्तनोतु भवतां श्रेयांसि कंसद्विषः ॥ ५ ॥**

**इति श्रीकविराजश्रीजयदेवकृते गीतगोविंदे महाकाव्ये**
**स्निग्धमाधवो नामसटीकश्चतुर्थः सर्गः ॥**

सं० टी०—वृष्टीति। गोपतनोर्गोपशरीरस्य कंसद्विषः कृष्णस्य बाहुर्हस्तो भवतस्तव भक्तस्येत्यर्थः श्रेयांसि कल्याणानि तनोतु विस्तारयतु। कथंभूतो बाहुः वृष्ट्या जलवर्षेण व्याकुलस्य दुःखितस्य गोकुलस्य गोपसमूहस्य अवनं पालनं तत्र रसोनुरागो वीर्यं वा तस्माद्गोवर्धनं पर्वतं उद्धृत्य उत्पाट्य चिरं सप्ताहं बिभ्रत् धारयन्। पुनः कीदृशः वल्लवीभिर्गोपीभिरधिकानंदादतिहर्षाच्चुंबितः कंदर्पेण कामवशात्ताभिर्गोपीभिः अर्पिताः स्थापिताः अधरतट्य एव सिंदूरचिह्नानि लोहितत्वात् तैरंकितश्चिह्नितः ॥ ५ ॥

भा० टी०–वर्षासे व्याकुल हुए व्रजवासियोंके कुलकी रक्षामें अनुरागसे गोवर्द्धन पर्वतको उठाके बहुत कालतक धारण करती हुई और गोपियोंकरके अत्यंत आनंदसे चुंबी हुई और कामदेवके वशसे तिनंहीं गोपियों करके स्थापित की हुई ऐसे गोपशरीरधारी कंसके शत्रु श्रीकृष्ण भगवान्की भुजा तुम्हारे कल्याणोंको बढ़ाओ ॥ ९ ॥

इतिश्रीगीतगोविंदस्य रसिकप्रियानाम भाषाटीकायां चतुर्थः सर्गः ॥ ४ ॥

## अथ पंचमः सर्गः प्रारभ्यते ।

अब पांचवां सर्ग प्रारंभ किया जाता है.



इदानीं कृष्णप्रेरिता सखी राधामाह–

**श्लोकः ॥ अहमिह निवसामि याहि राधामनुनय मद्वचनेन चानयेथाः ॥ इति मधुरिपुणा सखी नियुक्ता स्वयमिदमेत्य पुनर्जगाद राधाम् ॥ १ ॥**

सं० टी०–अहमिति । इति मधुरिपुणा कृष्णेन नियुक्ता प्रेरिता सखी स्वयमेत्य इदं वक्ष्यमाणं राधां पुनर्जगाद ऊचे । इतीति किं हे सखि अहमिह कुंजे निवसामि स्थितोस्मि त्वं राधां प्रतियाहि अनुनय च सांत्वय मद्वचनेन मद्वचसा राधामानयेथाश्च आनयस्व इति ॥ १ ॥

भा० टी०–हे सखि! मैं यहां ठहरता हूं तू राधाके पास जा और उसे समझाय फिर मेरे वचनसे राधाको लेआ इस प्रकारसे श्रीकृष्ण करके प्रेरीहुई सखी आप प्राप्त होके फिर राधासे यह वक्ष्यमाण वचन कहती भई ॥ १ ॥

अथ दशमप्रबंधो वराडिरागेण रूपकताले गीयते

अब दशवां प्रबंध वराडि रागसे रूपकतालमें गाया जाता है–

यत्सखी जगाद तदेव गीतेनाह–

**वहति मलयसमीरे मदनमुपनिधाय ॥ स्फुटति कुसुमनिकरे विरहिहृदयदलनाय ॥ १ ॥ तव विरहे वनमाली सखि सीदति ॥ ध्रु० ॥**

सं० टी०—वहतीति । गीतस्यास्य वराडी रागः रूपकतालः तल्लक्षणं "विनोदयंती दयितं सुकेशी सुकंकणा चामरचालनेन । कर्णे दधाना सुरपुष्पगुच्छं वरांगनेयं कथिता वराडी"। अभिसारिका नायिका वर्णनीया रसिकरसत्वे "संस्कृता प्राकृता मिश्रा ततोपभ्रंशभाषणा। ततः प्रियतरा वेश्या सर्वतश्चाभिसारिका" इति। तस्या लक्षणं भरतेनोक्तं "लज्जां हित्वा समाकृष्य यौवनेन मदेन वा । अभिसारयते कांतं कीर्त्तिता साभिसारिका" गीतार्थस्तु हे सखि राधे त्वद्विरहे त्वद्वियोगे वनमाली कृष्णः सीदति दुःखितो भवति । कस्मिन्सति मदनं कामं उपनिधाय सहायं कृत्वा मलयसमीरे दक्षिणसंबंधिनि पवने वहति सति विरहिणां वियोगिनां हृदयदलनाय आस्फोटनाय कुसुमानां निकरे समूहे स्फुटति सति विकसति सति ॥ १ ॥

भा० टी०–हे[1] सखि ! तेरे[2] वियोगविषे[3] कामदेवको[4] सहाय[5] करके मलयाचलकी[6] शीतल वायु चलते समय और विरहि जनोंके हृदय फाडनेकेवास्ते पुष्पसमूह खिलनेके समय श्रीकृष्णी[11] दुःखित[12] होताहै ॥ १ ॥

दहति[1] शिशिरमयूखे[2] मरणम[3]नुकरोति[4] ॥ पतति[5]
मदनविशिखे विलपति वि[6]कलतरोऽति ॥ २ ॥

सं० टी०—दहतीति । हे राधे सः कृष्णः शिशिरमयूखे हिमकरे दहति सति संतापं जनयाति सति मरणमनुकरोति मरणावस्थाजनितपीडामनुभवाति त्वत्प्राप्त्याशया कष्टेन जीवनं धारयतीत्यर्थः । मदनविशिखे कामबाणे पतति सति अति विलपति अतिशयेन विलापं करोति । कीदृशः कृष्णः विकलतरः विह्वलतरः ॥ २ ॥

भा० टी०–हे राधे ! शीतल किरणोंवाला चंद्रमाभी जलानें लगता है तब वह कृष्ण मरण समय सरीखे दुःखका अनुभव करता है. कामदेवका बाण पडता है तब वह विकल होके अत्यंत विलाप करता है ॥ २ ॥

ध्वनति[1] मधुपसमूहे[2] श्रवणम[3]पि[4] दधाति[5] ॥ मनसि[6]
वलितविरहे[7] निशि[8] निशि[9] रुजमुप[10]याति[11] ॥ ३ ॥

सं० टी०—ध्वनतीति । मधु पिबंति ते मधुपा भ्रमरास्तेषां समूहे ध्वनति शब्दं कुर्वति सति श्रवणं कर्णौ अपि दधाति अंगुल्यग्रेणाच्छादयाति । मनसि वलितविरहे सति निशिनिशि प्रतिरात्रं रुजं पीडां उपयाति प्राप्नोति ॥ ३ ॥

भा० टी०—भ्रमरसमूह शब्द करते हैं तब कानोंकोभी ढँक लेता है मनमें विरह बली होता है, तब दरएक रात्री रात्रीमें पीडांको प्राप्त होता है ॥ ३ ॥

वसति विपिनविताने त्यजति ललितमपि धाम ॥
लुठति धरणिशयने बहु विलपति तव नाम ॥ ४ ॥

सं० टी०—वसतीति । स विपिनविताने अरण्यविस्तारे वसति तिष्ठति । ललितमपि धाम सुंदरमपि गृहं त्यजति । पृथ्वीशय्यायां लुठति विचेष्टते । तव नाम बहु अनेकवारं विलपति । अथवा धाम शरीरं अखिललावण्यास्पदं श्रीविग्रहमपि त्वां विना नाशास्त इत्यर्थः ॥ ४ ॥

भा० टी०—अरण्य (बन)के विस्तारमें वसता है सुंदर घरको भी त्यागता है और पृथ्वीकी शय्यापर लोटता है तुम्हारे नामका बहुतसा विलाप करता है ॥ ४ ॥

रणति पिकसमवाये प्रतिदिशमनुयाति ॥
हसति मनुजनिचये निजविरहमपलपति नेति ॥ ५ ॥

स०टी०—रणतीति । पिकसमवाये पिकानां कोकिलानां समवायः समुदायः तस्मिन् रणति कूजति साति । अणरणवणभणशब्दार्थाः । तस्माल्लटः शता प्रतिदिशम् दिशंदिशमिति प्रतिदिशम् अव्ययंविभक्तीत्यादिना समासः । अनुयाति कोकिलरवं श्रुत्वा त्वच्छब्दभासेन तदनुयातीति भावः । मनुजनिचये मनुजानां मनुष्याणां निचये समूहे हसति साति निजविरहं त्वद्वियोगजं विरहं न इति त्वं माभूः अपलपति निर्भर्त्सयति । लोकानां सर्वत्रानन्दे स्वीय दुःखतिरस्कारस्य सर्वत्रैव प्रसिद्धिः । लपेः शब्दार्थत्वाद्विकर्मत्वम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादिवत् ॥ ५ ॥

भा० टी०—वह श्रीकृष्ण कोयल पक्षियोंके समूह शब्द करते हैं तब तेरे शब्दकी

भ्रांतिसे दिशा दिशामें भाजता फिरता है और मनुष्योंके समूहके हंसनेके समय "नेति अर्थात् तू ऐसा मत हो ऐसे अपने वियोगका अपलाप ( वेंडना ) करता है ॥ ५ ॥

**स्फुरति कलरवरावे स्मरति भणितमेवं ॥ तव**
**रतिसुखविभवे बहु गणयति सुगुणमतीव ॥ ६ ॥**

सं० टी०—स्फुरतीति । कलरवरावे कलोमन्द्रः रवःशब्दो येषां ते पक्षिणः तेषां रावे शब्दे स्फुरति समुत्पादयति सति भणितं त्वत्कृतं सम्भाषणं स्मरति 'भणितं रतिकूजितम्' इत्यमरः । तत्स्मृत्वा अग्रे किमित्यत आह । तव रतिसुखविभवे तव क्रीडासुखोत्पत्तौ तत्सुखं बहु अतीव सुगुणं यथा तथा गणयति मनुते ॥ ६ ॥

भा० टी०—मनोहर शब्दवाले पक्षियोंके शब्द होनेपर मैथुनक्रीडाके शब्दोंको ही स्मरण करता है और तुम्हारे मैथुन क्रीडाके सुखका अनुभव होनेपर उस सुखको बहुतही घनो गुणयुक्त मानतो है ॥ ६ ॥

**त्वदभिधशुभदमासं वदति नरि शृणोति ॥ तम**
**पि जपति सरसं परयुवतिषु न रतिमुपैति ॥ ७ ॥**

सं० टी०—त्वदिति । नरि मनुष्ये त्वदभिधशुभदमासं तवाऽभिधो राधाभिधः शुभदश्चासौ मासः वैशाख इत्यर्थः । "वैशाखे माधवोराधइत्यमरः" । एकदेशविकृतमनन्यवत् । वदति गायति सति शृणोति तत्र लक्ष्यं ददाति । तच्छ्रुत्वा तमेव सरसं रसेन युक्तं यथा तथा जपति । एवमपि परस्त्रिषु त्वदन्यस्त्रीषु रतिं सुखं न उपैति न प्राप्नोति ॥ ७ ॥

भा० टी०—मनुष्य तुम्हारे नामका, शुभदायक, महीनेका राध नामक वैशाखका उच्चारण करते है तब सुनता है तिसकोहि अनुराग सहित जपता है अन्यस्त्रियोंमें रमण नहीं चाहता है ॥ ७ ॥

**भणति कविजयदेव इति विरहविलसितेन ॥ म-**
**नसि रभसविभवे हरिरुदयतु सुकृतेन ॥ ८ ॥**

**इति श्रीगीतगोविंदे दशमः प्रबंधः ॥ १० ॥**

सं० टी०—भणतीति । कविजयदेवे इति हरेः विरहस्य वियोगस्य विलसितेन विलासितेन भणति सति वियोगचेष्टितं कथयति सतीत्यर्थः । हरिः कृष्णः मनसि जयदेवसंबंधिचित्ते सुकृतेन पूर्वार्जितपुण्येन हेतुना उदयतु उदयं प्राप्नोतु । कीदृशे मनसि रभसस्य हर्षस्य विभव आधिक्यं यस्मिन् ॥ ८ ॥

भा० टी०—जयदेव कविसे ऐसे वियोग विलास करके कहेपर श्रीकृष्ण भगवान् हर्षादिकवाले ( जयदेवके ) मनमें सुकृतके प्रभावसे उदय हो ॥ ८ ॥

इतिश्रीगीतगोविंदस्य रसिकप्रियानामभाषाटीकायां दशमः प्रबंधः ॥ १० ॥

किंच त्वत्प्राप्त्यर्थं तपः करोतीत्याह—

**श्लोकः ॥ पूर्वं यत्र समं त्वया रतिपतेरासादिताःसिद्धय**
**स्तस्मिन्नेव निकुंजमन्मथमहातीर्थे पुनर्माधवः ॥**
**ध्यायंस्त्वामनिशं जपन्निव तवैवालापमंत्रावलिं**
**भूयस्त्वत्कुचकुंभनिर्भरपरीरंभामृतं वांछति ॥ १ ॥**

सं० टी०—पूर्वमिति । श्रीकृष्णस्तस्मिन्नेव निकुंजमन्मथमहातीर्थे निकुंजमेव लतागृहमेव मन्मथमहातीर्थं कामतीर्थं तत्र पुनस्त्वां अनिशं वारंवारं ध्यायन् तवैव आलापमेव संभाषणमेव मंत्रावलिं मंत्राक्षरसमूहं जपन्निव भूयः पुनरपि त्वत्कुचकुंभनिर्भरपरीरंभामृतं त्वदीयस्तनकलशगाढालिंगनं पीयूषमिवामृतमिव वांछति । तस्मिन् कस्मिन् यत्र महातीर्थे त्वया समं पूर्वं रतिपतेः कामस्य सिद्धयो मनोरथाः आसादिताः प्राप्ताः यथा सिद्धिप्राप्त्यनंतरं मोक्षामृतं प्राप्यते तद्वत् ॥ १ ॥

भा० टी०—जहां निकुंज(लतास्थान)रूपी कामदेवके महातीर्थविषे पहले तेरे संग कामदेवके मनोरथ प्राप्त भयेथे तिसेही (जगह) श्रीकृष्ण फिरे तुमको निरंतर चिंतवन करते हुए तेरेही संभाषणरूप मंत्राक्षर समूहको जपतेहुएकीतरह फिरभी तुम्हारे कुचकुंभसे आगाढ मिलनरूप अमृतकी इच्छा करते हैं ॥ १ ॥

अथ एकादशप्रबंधः केदाररागेण एकतालीताले गीयते.

अब ग्यारहवां प्रबंध केदाररागसे एकताली तालमें गाया जाताहै

रतिसुखसारे गतमभिसारे मदनमनोहरवेषम् ॥ न कुरु
नितंबिनि गमनविलंबनमनुसर तं हृदयेशम् ॥ १ ॥
धीरसमीरे यमुनातीरे वसति वने वनमाली ॥ गोपी
पीनपयोधरमर्दनचंचलकरयुगशाली ॥ ध्रु० ॥

सं० टी०—इतिपदार्थपाठः कुत्रचिदस्ति । गोपीपीनपयोधरयोर्मर्दनेन चंचलेन करयुगेनाढ्यः । "आढ्यः शालीति विख्यातः" । हे राधे यमुनातीरे वने अथवा वेतसवने वनमाली श्रीकृष्णो वसति । किंभूते वने धीरो मंदः समीरो वायुर्यत्र । एतेन वायोस्त्रैविध्यमुक्तं तस्याश्च स्थानोत्कंठा जानिता इति ध्रुवपदम् । हे नितंबिनि त्वं तं वनमालिनमनुसर अनुगच्छ गमनविलंबनं अभिसाराय कालातिक्रमं न कुरु मा कृथाः । हे नितंबिनि बृहन्नितंबत्वाच्चलितं न शक्नोतीति तां त्वरयति । किंभूतं रतिः संभोगसुखं सारमुत्कृष्टं यत्र अभिस्रियतेऽस्मिन्नित्यभिसारः संकेतस्थानं तत्र गतं प्राप्तं । पुनः कथंभूतं हृदयेशं तव मनस्तदधीनमित्यर्थः । आयुरेवेदामितिवत् केवलसुखहेतुत्वात् शमेव ॥ १ ॥

भा० टी०—यमुनाके तीरपर मंदे मंद वायुयुक्त वनमें गोपियोंके कठोर भारी कुचाओंके मर्दनमें चंचल दोनों हाथोंवाले श्रीकृष्ण बास करते हैं इसलिये हे दीर्घ कूलोंवाली प्रिये ! क्रीड़ाके उत्कृष्ट सुखवाले संकेत स्थानमें प्राप्त हुए मदनके समान मनोहर वेषवाले तिसे प्राणपति श्रीकृष्णके पास चलो गमनमें विलंब मत करो ॥ १ ॥

अपि च—

नामसमेतं कृतसंकेतं वादयते मृदु वेणुम् ॥ बहु
मनुते तनुते तनुसंगतपवनचलितमपि रेणुम् ॥ २ ॥

सं० टी०—नामसमेतामिति । हे राधे हरिः मृदु वेणुं कोमलं वंशं वादयते । मृद्धितिक्रियाविशेषणं । कथं यथा स्यात् तव नामाक्षरसंयुक्तं कृतसंकेतं यथा स्यात्तथा च पुनः ततो वने तनुसंगतपवनचलितं रेणुमपि बहु मनुते । कथं यथा भवति अतनु अनल्पं यथा भवति ॥ २ ॥

भा० टी०—हे राधे ! श्रीकृष्ण, तुम्हारे, नाम समेत संकेत किये हुए वंश ( वंशी ) को कोमल कोमल बजाते हैं ( और ) शरीरके लगीहुई वायुसे उडी रजकोभी बहुत मानते हैं विस्तृत भारी समझते हैं ॥ २ ॥

**पतति पतत्रे विचलति पत्रे शंकितभवदुपयानम् ॥ रच-**
**यति शयनं सचकितनयनं पश्यति तव पंथानम् ॥ ३ ॥**

सं० टी०—पततीति । हे राधे कृष्णः शयनं रचयति तव पंथानं पश्यति कथं भवति सचकितनयनं यथा स्यात् । किंभूतं तव पंथानं शंकितं भवत्या उपयानं आगमो यत्र तं पुंवद्भावात् भवतीशब्दस्य पुंस्त्वं । क्व सति पतत्रे पक्षिणि पतति वृक्षांतरं गच्छति सति । पुनः क्व सति वृक्षपत्रे चलति सति ॥३॥

भा० टी०—( हे राधे ) वह श्रीकृष्ण पक्षीको वृक्षपर बैठते समय पत्ते हिलते समय चकित नेत्रयुक्त होके शय्या बनाते हैं तुम्हारे आनेकी, शंकावाले तुम्हारे आनेके मार्गको देखै रहाहै ॥ ३ ॥

**मुखरमधीरं त्यज मंजीरं रिपुमिव केलिसुलोलम् ॥**
**चल सखि कुंजं सतिमिरपुंजं शीलय नीलनिचोलम् ॥ ४ ॥**

सं टी०—हे सखि राधे त्वं कुंजं चल । अभिसारानुरूपां सामग्रीं शिक्षयती । मंजीरं नूपुरं त्यज किंभूतं नूपुरं अधीरं अज्ञं अतएव मुखरं वाचालं अभिसारोचितं न जानाति । अथवा साध्वेतन्मंजीरस्य मुखरस्य यतो निमित्तवन्नैमित्तिकं । कुतः मंजीरमधीरमित्युक्तेः । पुनः किंभूतं केलौ क्रीडाय। सुलोलं अतएव रिपुमिव । अपिच । नीलनिचोलं नीलं कृष्णं वस्त्रं शीलय परिधेहि । किंविशिष्टं कुंजं तिमिरपुंजेन सहितं अथवा सतिमिरं पुंजं यथा स्यात्तथा चल । उद्योतहीनाभिसारोयुक्तः ॥ ४ ॥

भा० टी०—हे सखि ! (राधे) कुंजमें चलो ( और ) अधीर अर्थात् मूर्ख, बाचाल ( वाजनेवाला ) शत्रुकी तरह रमणसमयमें क्रीडा करनेवाला ऐसे इस, मंजीर अर्थात् नूपुर आभूषणको त्यागो और अंधकारके समूहसरीखे नीले वस्त्रको धारण करो ॥ ४ ॥

**उरसि मुरारेरुपहितहारे घन इव तरलबलाके ॥**
**तडिदिव पीते रतिविपरीते राजति सुकृतविपाके ॥ ५ ॥**

सं० टी०—हे पीते पीतवर्णे गौरि त्व मुरारेः उरासि सुकृतविपाके दुरापपरिणामे राजसि राजयिष्यासि । वर्तमानसामीप्ये लट् । किंविशिष्टे उरसि उपहितहारे आरोपितहारे । कथं कास्मिन्निव तरलबलाके घनइव मेघइव चंचलपक्षिविशेषे । केव ताडिदिव कदा रतिविपरीते पुरुषायितसुरतसमये उपहितहारं उरः तरलबलाकाघनेनोपमीयते । सा पीता ताडित् तस्यां पुरुषायितत्वे चंचलत्वम् ॥ ५ ॥

भा० टी०—हे पीतवर्णवाली ! ( गौरांगी ) विपरीत प्रकारसे मैथुन करनेके समय हारसे युक्त हुई सुकृतसे प्राप्त होनेवाली श्रीकृष्णकी छातीपर ( तुम ) मेघविषे चंचल बगुला पक्षीकी तरह दीखती हुई और बिजलीसी चमकती हुई शोभित होवोगी ॥ ५ ॥

**विगलितवसनं परिहृतरशनं घटय जघनमपिधानम् ॥**
**किसलयशयने पंकजनयने निधिमिव हर्षनिदानम् ॥ ६ ॥**

सं० टी०—हे राधे! किसलयशयनीये वर्तमाने पंकजनयने पुंडरीकाक्षे जघनं घटय आरोपय । किंभूतं विगलितवसनं स्वयमेव ततएव परिहृतरशनं त्यक्तमेखलं । अतएव वसनाभावात् अपिधानं पिधानरहितं । अतएव निधिनोपमीयते । किमिव निधिमिव । किंभूतं निधिं हर्षनिदानं हर्षस्य आदिकारणम् ॥ ६ ॥

भा० टी०—पत्तोंसे रचीहुई शय्यापर कमल सरीखे नेत्रोंवाले श्रीकृष्णके निमित्त खुलेहुए वस्त्रवाले खुलीहुई तागड़ीवाले आच्छादनरहित हुए जांघप्रदेश शरीरको आरोपित समर्पण करो हर्षका आदिकारण ( निधि ) खजाना सौंप दियाहो ऐसा करो ॥ ६ ॥

अपि च—

**हरिरभिमानी रजनिरिदानीमियमपि याति विरामम् ॥**
**कुरु मम वचनं सत्वररचनं पूरय मधुरिपुकामम् ॥ ७ ॥**

सं० टी०—हरिरिति । हे राधे सत्वररचनं शीघ्रसाधनं यथास्यात्तथा मम वचनं कुरु । किंतन्मम वचनं मधुरिपुकामं श्रीकृष्णवांछां पूरय । न चेत्किं स्यात् हरिरभिमानी अतोलाघवं न सहते पश्चात्त्वां त्यक्षति पश्चादपि करिष्यसे चेत् इदानीमेव कुरु अन्यथेयं रात्रिरपि विरामं अवसानं याति गच्छति अभिसारिककालोपि यास्यति ॥ ७ ॥

भा० टी०–( हे राधे ) शीघ्रता होसके जैसे तैसे मेरे वचनको करो श्रीकृष्णके कामको पूरण करो ( नहींतो ) श्रीकृष्ण अभिमानी है और अब यह रात्री भी अन्तको प्राप्त होती है ॥ ७ ॥

श्रीजयदेवे कृतहरिसेवे भणति परमरमणीयम् ॥
प्रमुदितहृदयं हरिमतिसदयं नमत सुकृतकमनीयम् ॥ ८ ॥
इति श्रीगीतगोविंदे एकादशः प्रबंधः ॥ ११ ॥

सं० टी०–हे वैष्णवाः ! हरिं नमत नमस्कुरुत । किंभूतं हरिं जयदेवे सदयं । किंविशिष्टे जयदेवे परमरमणीयं इदं पूर्वोक्तं भणति । कथं प्रमुदितहृदयं । किंभूते कृतहरिसेवे । किंभूतं हरिं सुकृतमिव कमनीयं सुकृतेन वा कमनीयं अभिलक्षणीयम् ॥ ८ ॥

भा० टी०–हे भक्तजनो! तुम अत्यंत दयासहित, और सुकृतकी तरह सुंदर श्रीकृष्णको प्रणाम करो, कैसे हैं वे कि हरि सेवन कियेपर श्रीजयदेव कविपर परम रमणीक ( इस गीतके कहनेसे अत्यंत प्रसन्न हृदयवाले हैं ॥ ८ ॥

इति श्रीगीतगोविंदस्य रसिकप्रिया भाषाटीकायां एकादशः प्रबंधः ॥ ११ ॥

इदानीं सत्वरगमनाय प्रोत्साहयति–

श्लोकः॥ विकिरति मुहुः श्वासानाशाः पुरो मुहुरीक्षते
प्रविशति मुहुः कुंजं गुंजन् मुहुर्बहु ताम्यति ॥
रचति मुहुः शय्यां पर्याकुलं मुहुरीक्षते
मदनकदनक्लांतः कांते प्रियस्तव वर्तते ॥ १ ॥

सं० टी०–हे कांते ! तव प्रियः मदनेन कदनं ग्लानिः तेन श्रांतः क्लांतः तथाविधः सन् किंकरोतीत्याह त्वं नागतैवेति कृत्वा मुहुः श्वासान् विकिरति निश्वासधाराः मुंचति पुरः अग्रे मुहुर्वारंवारं आशाः दिशः ईक्षते विलोकयति च व्याकुलतया कस्या दिशः आगमिष्यतीति सर्वा दिशः एककालमवलोकयति तत्राप्यदृष्ट्वा बहिर्निर्यातस्तत्रैव निह्नुत इव तिष्ठतीति मुहुर्मुहुः प्रविशति वारंवारं कुतोनागता किं केन विनिवारिता उत कुतो भयाद्वा इत्यादितस्याअना-

गमनहेतुं विसृत्य मुहुर्वारंवारं अव्यक्तशब्दं ताम्यति ग्लापयति । अथवा नू-थेदं विमर्शनं आगमिष्यत्येवेति मुहुः शय्यां रचयति तथाप्यदृष्ट्वा पर्याकुलं यथा स्यात्तथा ममानुरागादधुना आगमिष्यत्येवेति मुहुरीक्षते इति कदनशब्दस्य ता-त्पर्यम् । हरिणीच्छंदः दीपकालंकारः ॥ १ ॥

भा० टी०–हे कांते! राधे ! कामदेवकी ग्लानिसे दुःखित हुए तुम्हारे प्रिय ( श्रीकृष्ण) बारंबार श्वासोंको छोड़ते हैं, अपने आगे बारंबार दिशाओंको देखते हैं बारंबार कुंजघ-रमें प्रवेश करते हैं बारंबार अप्रकट शब्द करते हुए बहुतसी ग्लानिको प्राप्त होते हैं, बारंबार शय्याको रचते हैं और पर्य्याकुल चकित हो जैसे तैसे बारंबार देखें रहे हैं ऐसे वर्तमान हैं ॥ १ ॥

इदानीं सांप्रतं मे गंतुं योग्यमिति हेतुमाह—

**श्लोकः ॥ त्वद्वाक्येन समं समग्रमधुना तिग्मांशुरस्तंगतो**
**गोविंदस्य मनोरथेन च समं प्राप्तं तमः सांद्रताम् ॥**
**कोकानां करुणस्वनेन सदृशी दीर्घा मदभ्यर्थना**
**तन्मुग्धे विफलं विलंबनमसौ रम्योभिसारक्षणः ॥ २ ॥**

सं० टी०—त्वद्वाक्येनेति । मुग्धे मूढे त्वद्वाक्येनासूयामानसहितेन समं सह समग्रं सामग्र्येणाधुना इदानीं तिग्मांशुः सूर्यः अस्तंगतः असूयामानसहितः सूर्योस्तंगतः अभिसरणकालोयमित्यर्थः । गोविंदस्य कृष्णस्य मनोरथेन इदानीं राधा आगमिष्यतीति वांछया समं सह तमः अंधकारः सांद्रतां निबिडतां प्राप्तं तमसि अभिसरणं योग्यमित्यर्थः । दीर्घा मदभ्यर्थना शीघ्रं गम्यतामिति मदीया प्रार्थना कोकानां चक्रवाकानां करुणस्वनेन विरहदयाशब्देन सदृशी योग्या यथा कोकानां करुणस्वनो नानाप्रकारः श्रूयते तथा मदीयाः काकूक्तयः संप्र-तिकार्ये भवंतीत्यर्थः । तस्माद्धेतोर्विलंबनं विफलं । असौ अभिसारक्षणोऽभिसार कालो रम्योगमनयोग्य इत्यर्थः । सहोक्तिरलंकारः शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

भा० टी०–हे मुग्धे ! मूढे ! तेरे वचनकेही साथ अब संपूर्ण सूर्य छिपगया है अ-र्थात् यह तुम्हारा गमनसमय है और श्रीकृष्णके मनोरथके साथ अँधेरो अत्यंत बढ़ गया

है मेरी[१५] यह प्रार्थना दीर्घा[१६] बड़ी है अर्थात् शीघ्र गमन करो और यह मेरी प्रार्थना [२०]कवा चकवी पक्षीके विरहकी दयाके शब्द सरीखी है इसलिये विलंब करना वृथा है और यह अभिसारक्षण अर्थात् प्रियके पास जानेका समय सुंदर है ॥ २ ॥

अभिसारे रसाधिक्यं भवतीत्याह—

श्लोकः ॥ आश्लेषादनुचुंबनादनुनखोल्लेखादनुस्वांतजात्
प्रोद्बोधादनुसंभ्रमादनुरतारंभादनुप्रीतयोः ॥ अन्यार्थंगतयोर्भ्रमान्मिलितयोः संभाषणैर्जानतोर्दंपत्योर्निशि को न को न तमसि व्रीडाविमिश्रो रसः ॥ ३ ॥

सं० टी०—आश्लेषादिति । दंपत्योर्जायापत्योस्तमसि अन्धकारे व्रीडाविमिश्रोलज्जायुक्तः कः कः रसो न भवेत् इति न अपि तु सव्रीडः सर्व एव शृंगारादिः रसो भवत्येव । कथंभूतयोर्दंपत्योः अन्यार्थे परस्त्रीपरपुरुषार्थे गतयोः संकेतस्थानं प्राप्तयोः । पुनः कीदृशयोः भ्रमाद्भ्रांतेः गाढांधकारे रसात् मिलितयोः संगतयोः । अनंतरं आश्लेषादिविशेषणानि योजनीयानि । तत्र एवं संभोगक्रमः प्रथमं आलिंगनं ततश्चुंबनं ततो नखक्षतं ततः कामोद्बोधः ततः सत्वरः ततो मैथुनं ततः प्रीतिस्ततो भावनसितिक्रममाह । आश्लेषादालिंगनादनु पश्चान्नखोल्लेखादनु नखक्षतात् पश्चात् स्वांतजात्प्रोद्बोधादनु कामबोधात् पश्चात्संभ्रमादनु वेगात् पश्चाद्रतारंभात् अनु सुरतोद्योगात् पश्चात्प्रीतयोस्तृप्तयोः । पुनः कीदृशयोः संभाषणैरालापैर्जानतोः न ममेयं भार्या नायं मम पतिरिति ॥ ३

भा० टी०—अन्य किसी स्त्रीपुरुषकेवास्ते संकेत स्थानमें गयेहुए भ्रमसे अंधकारमें मिलेहुए स्त्रीपुरुषोंको रात्रिविषे अंधकारमें लज्जासे युक्त क्यौं क्यौं रस नहीं प्राप्त होता है किंतु आलिंगनसे पीछे मुखचुंबनके पीछे नख चभोये पीछे अंतःकरणमें उत्पन्न हुए कामदेवका बोध हुए पीछे वेगसे मैथुन करनेसे पीछे तृप्त हुए प्रसन्न हुए और बोलने बतलानेके संभाषणसे जानते हुए कि यह मेरी स्त्री नहीं है यह मेरा पति नहीं है ऐसा ज्ञान हुए पर लज्जायुक्त रस प्राप्तही होता है ॥ ३ ॥

इदानीं त्वल्लाभात्कृष्णः कृतार्थो भवत्वित्याह—

**श्लोकः ॥ सभयचकितं विन्यस्यंतीं दृशं तिमिरे पथि**
**प्रतितरु मुहुः स्थित्वा मंदं पदानि वितन्वतीम् ॥**
**कथमपि रहःप्राप्तामंगैरनंगतरंगिभिः सुमुखि सुभगः**
**पश्यन् स त्वामुपैतु कृतार्थताम् ॥ ४ ॥**

सं० टी०—सभयेति । हे सुमुखि सुवदने राधे सुभगः सौभाग्यवान् स कृष्णस्त्वां पश्यन् कृतार्थतां उपैतु प्राप्नोतु । कीदृशीं त्वां तिमिरे अंधकारसहिते पथि मार्गे सभयचकितं भयविस्मयाभ्यां सहितं यथा स्यात्तथा दृशं नेत्रं विन्यस्यंतीं निरीक्षयंतीं । निबिडांधकारदर्शनाद्भयः अंधकारे निःशंकागमनाद्विस्मयः । पुनःकीदृशीं प्रतितरु प्रतिवृक्षे मुहुः पुनः पुनःस्थित्वा मंदं शनैः पदानि चरणव्यापारान् वितन्वतीं मे प्रियतमोत्रैवागामिष्यतीति मंदं चरणारविंदं धारयंतीति भावः । पुनः कीदृशीं कथमपि अंधकारस्य निबिडत्वात्केनापि प्रकारेण रहः एकांतस्थलं प्राप्ताम् । पुनः कीदृशीं कामस्य यस्तरंगः पुनरुद्बोधः स येषु तैः कामोल्लासिभिरंगैर्हस्तपादादिभिरुपलक्षिताम् । उपलक्षणे तृतीया॥४॥

भा० टी०–हे सुमुखि सुंदर मुखवाली राधे! वह सौभाग्यवान् श्रीकृष्ण अंधकार सहित मार्गमें भय आश्चर्य हो जैसे तैसे नेत्रोंको चलाती हुई देखती हुई वृक्ष वृक्षके नीचे बारंबार खड़ी होके शनै शनै पैरोंको धरती हुई किसीके प्रकारसे एकांत स्थलमें प्राप्त हुई कामदेवके तरंगोंसे उल्लसित अंगोंकरके उपलक्षित हुई ऐसी तुमको देखती हुई कृतार्थताको प्राप्त होवे अर्थात् उसका मनोरथ पूर्ण होवे ॥ ४ ॥

इदानीं कविः सर्गांते भक्तजनमाशिषयाति—

**श्लोकः ॥ राधामुग्धमुखारविंदमधुपस्त्रैलोक्यमौलिस्थलीनेपथ्योचितनीलरत्नमवनीभारावतारक्षमः ॥ स्वच्छंदव्रजसुंदरीजनमनस्तोषप्रदोषश्चिरं कंसध्वंसनधूमकेतुरवतु त्वां देवकीनंदनः ॥ ५ ॥ इतिश्रीकविराज श्रीजय-**

देवकृते गीतगोविंदे महाकाव्ये अभिसारिकावर्णने साकांक्षपुंडरीकाक्षो नाम सटीकः पंचमः सर्गः ॥ ५ ॥

सं० टी०—राधेति । देवकीनंदनः श्रीकृष्णः त्वां भक्तं चिरं अवतु दुरिताद्रक्षतु । कीदृशः कृष्णः राधाया मुग्धं सुंदरं यन्मुखारविंदं मुखकमलं तस्य मधुपो भ्रमर इव नीलत्वान्मुखपानकर्तृत्वाच्च । पुनः कीदृशः । अवन्या भारावतारे क्षमः समर्थः अवनीभारावतारांतकः इति वा पाठः । तदा अवन्याः भुवः भाररूपोवतारो येषामसुराणां तेषामंतको नाशकः । पुनः कीदृशः स्वच्छंदानां स्वाधीनानां व्रजसुंदरीजनानां गोपीनां मनस्तोषे चित्तसंतोषे दोषो रात्रिमुखमिव । रात्रिमुखे हि नार्यस्तुष्यंति । पुनः कीदृशः त्रैलोक्यस्य लोकत्रयस्य या मौलिस्थली वृंदाटवी तस्या नेपथ्योचितमलंकारयोग्यं नीलरत्नमिव स्थितः । पुनः कीदृशः कंसस्य मातुलस्य मारणे धूमकेतुरिव स्थितः । राधागमने साकांक्ष इत्यर्थः ॥ ५ ॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविन्दे महाकाव्ये अभिसारिकावर्णने साकांक्षपुण्डरीकाक्षोनामसटीकः पञ्चमः सर्गः ॥ ५ ॥

भा० टी०—राधाजीके सुंदर मुखारविंदके भ्रमररूप पृथ्वीके भार उतारनेमें समर्थ, इच्छापूर्वक विचरनेवाली गोपीजनोंके मनको प्रसन्न करनेमें रात्रिमुख, संध्यारूप और त्रिलोकीकी शिरोमणि वृंदावन भूमिके अलंकार योग्य नील रत्नकी तरंह स्थितहुए, कंसके मारनेमें अग्निके समान ऐसे देवकीनंदन, श्रीकृष्णभगवान् तुम्हारी भक्तजनोंकी, बहुतकालतक रक्षा करो ॥ ५ ॥

इतिश्रीकविराज० गीत० महाकाव्य० र० नामभाषाटीकायां पंचमः सर्गः ॥ ५ ॥

---

## अथ षष्ठ सर्गः प्रारभ्यते ॥

अब छठो सर्ग प्रारंभ होताहै ॥

---

श्लोकः ॥ अथ तां गंतुमशक्तां चिरमनुरक्तां लतागृहे दृष्ट्वा ॥
तच्चरितं गोविंदे मनसिजमंदे सखी प्राह ॥ १ ॥

सं० टी०—अथेति । अथ शब्दो मंगलार्थः । अनंतरं वा सखी गोविंदे कृष्णांतिकमागत्येत्यर्थः । तच्चरितं राधाचरितं प्राह उक्तवती । किं कृत्वा लताग्रहे तां राधां गंतुमशक्तां दृष्ट्वा । कीदृशीं राधां चिरमनुरक्तां अनुरागिणीं । कीदृशे गोविंदे मनसिजेन कामेन मंदे पीडिते ॥ १ ॥

भा० टी०—इससे अनंतर वह सखी लतागृह कुंजमें आवनेको असमर्थ हुई बहुतकालसे अनुरागवाली हुई तिस राधाको देखके कामदेवसे पीड़ितहुए श्रीकृष्णके समीप आके तिसके चरित्रको कहती भई ॥ १ ॥

अथ द्वादश प्रबंधो गुणकरीरागेण रूपकताले गीयते.

यहांसे बारहवां प्रबंध गुणकरी रागकरके रूपकतालमें गायाजाता है—

**पश्यति दिशि दिशि रहसि भवंतम् ॥**
**त्वदधरमधुरमधूनि पिबंतम् ॥ १ ॥**
**नाथ हरे जय नाथ हरे सीदति राधा वासगृहे ॥ ध्रु० ॥**

सं० टी०—गुणकरीरागः रागलक्षणं "रतोत्सुकाकांतपथप्रतीक्षामालापयंती मृदुपुष्पतल्पे । इतस्ततः प्रेरितदृष्टिरार्ता श्यामा तनुर्गौणकरी प्रदिष्टा" इतिअस्मिन्वासकसज्जावर्णनं "वासवेश्मनि कल्पिततल्पे वा समागमविधिं विदधाना । पश्यति प्रियसमागमशय्यां पश्यति स्म प्रियवासकशय्यां" इति । पश्यतीति । हेनाथ हेहरे द्विरुक्तिः सा राधा तव वासगृहे सांकेतिकनिकुंजमंदिरे त्वत् त्वत्तः हेतोः सीदति अवसन्ना भवति । कथमित्यत आह सा राधा एकांते स्थिता सती दिशिदिशि भवंतं त्वां पश्यति अवलोकयति । कीदृशं त्वां अधरवत् नायकाधरामृतवत्मधुराणि मधूनि माध्वीकानि पिबंतम् ॥ १ ॥

भा० टी०—हे नाथ! हे हरे! सर्वोत्कर्षसे बढ़ो- हे नाथ! हे हरे! (वह राधा तुम्हारे वासघरमें संकेत कियेहुए कुंजस्थानमें तुम्हारे हेतुसे दुःख पाती है एकांतमें स्थितहुई अधरामृत रूप मधुको पीतेहुए तुमको दिशा दिशामें देख रहीहै ॥ १ ॥

नन्वेवं चेत्तर्हि किमिति नागतेत्यत आह—

**त्वदभिसरणरभसेन वलंती ॥**
**पतति पदानि कियंति चलंती ॥ २ ॥**

सं० टी०—त्वदभिसरणे तवाभिसारे रभस उत्साहस्तेन वलंती अभिमुखी भवंती। कियंति कतिपयानि पदानि चलंती सती पतति। त्वद्विरहमूर्च्छया गंतुमसमर्थेत्यर्थः ॥ २ ॥

भा० टी०—तुम्हारे आवनेके उत्साह करके सन्मुख होती हुई कितेक पैरें चलके पड़ती है ॥ २ ॥

हाकष्टमेवं चेदशक्ता तर्हि कथं जीवतीत्यत आह—

विहितविशदबिसकिसलयवलया ॥
जीवति परमिह तव रतिकलया ॥ ३ ॥

सं० टी०—हे कृष्ण सा राधा तव रतेः कलया सुरतलेखचिंतनेन इह समये परं केवलं जीवति जीवनहेतुरन्यो नास्तीत्यर्थः। कीदृशी विहिताः कृताः विशदाः शुभ्रा बिसकिसलयाः मृणालांकुरा एव वलयाः कंकणानि यस्याः सा ॥३॥

भा० टी०—हे कृष्ण! कमलकंदोंके सफेद अंकुरोंको कंकण आभूषण करनेवाली वह राधा, तुम्हारे मैथुनकेही चिंतवन करके इससमय केवल जीवतीही है ॥ ३ ॥

मुहुरवलोकितमंडनलीला ॥
मधुरिपुरहमिति भावनशीला ॥ ४ ॥

सं० टी०—मुहुरिति। सा कीदृशी पूर्वपदेनान्वयः। पुनः पुनः अवलोकिता मंडनलीला अलंकारविलासो यया। तेन विना निरर्थकमिति पुनः पुनः वदति। पुनः कीदृशी अहं मधुरिपुः कृष्ण इति भावनं ध्यानमेव शीलं स्वभावः सद्वृत्तं यस्याः सा ॥ ४ ॥

भा० टी०—वारंवार आभूषणोंका विलास देखनेवाली वह राधा ऐसे कहती है कि तिस कृष्णके विना ये अलंकारोंका विलास निरर्थक है और मैं श्रीकृष्णहीहूं ऐसी भावना स्वभाववाली है ॥ ४ ॥

तदेवाह—

त्वरितमुपैति न कथमभिसारम् ॥
हरिरिति वदति सखीमनुवारम् ॥ ५ ॥

सं० टी०—त्वरितामिति । हरिः मच्चित्तापहारी अभिसारं संकेतस्थलं त्वरितं शीघ्रं कथं कस्माद्धेतोः नोपैति नागच्छतीत्यनुवारं सखीं वदति ॥ ५ ॥

भा० टी०—हरि अर्थात् मेरे चित्तको हरनेवाले श्रीकृष्ण, संकेत स्थानको शीघ्रही क्यों नहीं आते हैं ऐसें वारंवार सखीसे कहती है ॥ ५ ॥

अपिच—

श्लिष्यति चुंबति जलधरकल्पम् ॥
हरिरुपगत इति तिमिरमनल्पम् ॥ ६ ॥

सं० टी०—श्लिष्यतीति । सा हरिरुपगतः प्राप्त इति बुद्ध्याऽनल्पं बहु तिमिरमंधकारं श्लिष्यति आलिंगति चुंबति च । कीदृशं तिमिरं जलधरकल्पं मेघसदृशं । स्निग्धत्वान्नीलत्वाच्च कृष्णसाम्यं तिमिरस्य ॥ ६ ॥

भा० टी०—और श्रीकृष्ण प्राप्त होगये ऐसे जानके बडे भारी मेघ सरीखे रात्रीके अंधेरेको आलिंगन करती है चुंबती है ॥ ६ ॥

भवति विलंबिनि विगलितलज्जा ॥
विलपति रोदिति वासकसज्जा ॥ ७ ॥

सं० टी०—भवतीति । भवति त्वयि विलंबिनि विलंबं कुर्वति सति विगलितलज्जा गतलज्जा सा राधा विलपति । हे निष्कृप कथमेतावदौदास्यं मयि त्वयाऽऽचरितमिति विलापं करोति रोदिति अश्रूणि मुंचति । कीदृशी वासकसज्जा विहितसंविधानेत्यर्थः । लक्षणं तूक्तमेव ॥ ७ ॥

भा० टी०—तुम्हारे विलंब होनेपर सम्यक् विधान कियेहुए विगतलज्जावाली हुई विलाप करती है रोती है ॥ ७ ॥

श्रीजयदेवकवेरिदमुदितम् ॥
रसिकजनं तनुतामतिमुदितम् ॥ ८ ॥
इति श्रीगीतगोविंदे द्वादशः प्रबंधः ॥ १२ ॥

सं० टी०—श्रीजयदेवेति । श्रीजयदेवकवेः उदितं भाषितं इदं गीतं रसिकजनं श्रृंगाररसभावनाभावितांतःकरणं अतिमुदितं अतिशयेन हर्षयुक्तं तनुतां करोत्वित्यर्थः ॥ ८ ॥

भा० टी०—श्रीजयदेव कविका कहाहुआ यह गीत रसिकजनको अत्यंत हर्षयुक्त करो॥८॥

इतिश्री गीतगोविंदस्य रसिकप्रियानामभाषाटीकायां द्वादशः प्रबंधः ॥ १२ ॥

इदानीं तस्यास्त्वदेकपरत्वमाह—

**श्लोकः ॥ विपुलपुलकपालिःस्फीतसीत्कारमंतर्जनितजडिमकाकुव्याकुलं व्याहरंती ॥ तव कितव विधायामंदकंदर्पचिंतां रसजलधिनिमग्ना ध्यानलग्ना मृगाक्षी ॥ १ ॥**

सं० टी०—हेकितव धूर्त सा मृगाक्षी मृगशावलोचना तव रसजलनिधिमग्ना त्वच्छृंगाररससागरे निमग्ना लीना बभूवेत्यध्याहारः । किंकृत्वा अमंद कंदर्पस्य महतः कामस्य चिंतां स्मरणं विधाय हृदि कृत्वा ध्यानेन तवैव चित्ते लग्ना तत्परा । रससागरमग्नायाश्चेष्टितमाह । विपुला महती पुलकपाली रोमांचपंक्तिर्यस्याः सा ध्यानकल्पितत्वत्करस्पर्शेन रोमांचतीत्यर्थः। किं कुर्वती त्वद्दत्तं दंतनखक्षतादिकं परिकल्प्य स्फीतसीत्कारं प्रवृद्धसीत्कारं यथा स्यात्तथा व्याहरंती अंतरभ्यंतरे जनित उत्पादितो जडिमा जडत्वं यस्यां क्रियायां तद्यथातथा काकुना । ध्वनिना ध्वनिविकारविशेषेणाऽऽकुलं यथा स्यात्तथा व्याहरंती ध्यानेन तव स्तनालंभनाधरपाननीवीबंधनोन्मोचनासक्तं परिकल्प्य मुंचमुंच नन मामेति निषेधवाक्यं वदंतीत्यर्थः ॥ १ ॥

भा० टी०—हे कितव ! धूर्त ! वह, मृगाक्षी राधा, बडेभारी कामदेवकी चिंता उठाके तुम्हारे ध्यानमें लगी हुई रस, स्नेहरूपी सागरमें डूब गई है कैसे कि बहुतसे रोमांच खडेहुये रोमोंवाली तुम्हारे नखच्छेद चुंबनादिसे बढाहुआ सीत्कार शब्द हो जैसे तैसे अंतःकरणमें उत्पन्न हुए जडपनेयुक्त काकु अर्थात् न न मुंच मुंच इत्यादि ध्वनियोंसे व्याकुलतापूर्वक बोलती है यह रसरूपी सागरका निमज्जनप्रकार है ॥ १ ॥

श्लोकः ॥ अंगेष्वाभरणं करोति बहुशः पत्रेपि संचारिणि
प्राप्तं त्वां परिशंकते वितनुते शय्यां चिरं ध्यायति ॥
इत्याकल्पविकल्पतल्परचनासंकल्पलीलाशतव्यास
क्तापि विना त्वया वरतनुर्नैषा निशां नेष्यति ॥ २ ॥

सं० टी०—अंगेष्विति । एषा वरतनुः सुंदरांगी । एषेति । बुद्ध्या प्रत्यक्षीकृत्य वदति । राधा अंगेषु आभरणं अलंकारं बहुशः करोति । अनेनाकल्पः कथितः । पत्रेपि वृक्षपत्रेपि संचारिणि पक्ष्यादिना चलति सति त्वामागतं परिशंकते सर्वतो वितर्कयतीत्यर्थः । अनेन विकल्पः । अपि च त्वामागतं ज्ञात्वा तव कामकेलिनिमित्तं शय्यां वितनुते कुरुते । अनेन तल्प कथितः । चिरं बहुकालं ध्यायति त्वदागमनोपायं चिंतयति । रचनेयं दर्शिता कृष्णसंगमे मया इदमिदं कर्तव्यमित्यनेन संकल्पलीलाशतमुक्तं । इति पूर्वोक्तप्रकारेण आकल्पो भूषणं विकल्पस्तर्कः तल्परचना शय्यारचना संकल्पलीलाशतं एतेषु व्यासक्तापि त्वया विना त्वामृते निशां रात्रिं न नेष्यति प्रभातं प्रापयितुं समर्था न भविष्यतीत्यर्थः ॥ २ ॥

भा० टी०—यह सुंदर अंगवाली राधा बहुतबार शरीरोंपर आभूषण धारण करती है और पत्ते हिलनेमें भी आये क्या तुम ऐसी शंका करती है शय्या रचती है बहुत कालतक तुम्हारा चिंतवन करती है इस प्रकारसे आभूषण पहिनना, तर्क करना, शय्या रचनी संकल्पोंकी सैंकड़ों लीला करनी, इनमें आसक्त हुई भी तुम्हारे विना रात्रीको नहीं काट सकती है ॥ २ ॥

अधुना कविः सर्गांते भक्तानाशिषयति—

श्लोकः ॥ किं विश्राम्यसि कृष्णभोगिभवने भांडीरभू-
मीरुहि भ्रातर्यासि न दृष्टिगोचरमितः सानंदनंदास्पदम् ॥
राधाया वचनं तदध्वगमुखान्नंदांतिके गोपतो
गोविंदस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा गिरः ॥ ३ ॥

इति श्रीकविराजश्रीजयदेवकृतगीतगोविंदे महाकाव्ये
वासकसज्जावर्णने सोत्कंठवैकुंठोनाम षष्ठः सर्गः ॥ ६ ॥

सं० टी०—किमिति । गोविंदस्य कृष्णस्य गिरः वाचः जयंति सर्वोत्कर्षेण वर्तंते । कीदृशाः गिरः सायंकाले अतिथीनां प्राशस्त्यं प्रशंसा तद्गर्भे आशये यासां ताः । व्याजोक्तिनामालंकारः । कथंभूतस्य गोविंदस्य नंदांतिके नंदगोपपार्श्वे तत्तादृक् संकेतसूचनारूपं अध्वगमुखान्निःसृतं राधायाः वचनं गोपतः गोपनं कुर्वतः । किं तद्वचनं तत्राह । हेभ्रातः पथिक इति कोमलामंत्रणे भांडीरभूमिरुहि भांडीरनाम्नि वटवृक्षे किं विश्राम्यसि विश्रामं मा कृथाः । तत्र हेतुः कृष्णश्चासौ भोगी च तस्य भवने कालसर्पवासे । पक्षे-कृष्णस्य भोगिनः शृंगारिणो विलासगृहे । पक्षद्वये नेह स्थेयमिति भ्रातृपदोपादानं श्लेषालंकारश्चात्र । तर्हि क यामीत्यत आह । इतो वटात् दृष्टितो गोचरं प्रत्यक्षीक्रियमाणं तत्सानंदं सकलर्द्धिमन्नंदस्यास्पदं नंदगोपगृहं न यासि अपि तु याहीति राधावचनं अध्वगमुखान्नंदांतिके शृण्वतो गोविंदस्य गिरो जयंतीत्यर्थः । सोत्कंठे उत्कंठासहितो वैकुंठः श्रीकृष्णो यत्र ॥ ३ ॥

भा० टी०—राधाने किसी पथिकसे ( व्याजोक्तिनामअलंकारसे ) कहा, कि हे भाई ! कालेसर्पका वासस्थान अथवा कृष्णका भोगस्थान इस, भांडीर नाम वटवृक्षके नीचे क्या विश्राम करौगे, नहीं करना, क्यौंकि वहां काला सर्प रहता है अथवा शृंगारशिरोमणि श्रीकृष्णका वहां क्रीड़ाभवन है अर्थात् दोनोंपक्षमें वहां रहना ठीक नहीं । अब ( यहां श्लेषालंकार है ) तब वह पथिक बोलता है कि मैं किधर जाऊं? तब राधाजी जबाब देती है कि यहांसे प्रत्यक्ष दीखतेहुए आनंदयुक्त नंदजीके घरको क्यों नहीं जातेहो वहां अवश्य जावो इस प्रकारके वाक्योंका तिसे पथिक वटेऊके मुखसे राधाके कहेहुए वचनको नंदके समीपमें गुप्त करतेहुए श्रीगोपालकृष्णकी, सायंकालमें अभ्यागतोंकी प्रशंसायुक्त आशयवाली वाणी सर्वोत्कर्षसे वर्तती हैं ॥ २ ॥

इतिश्रीगीतगोविंदस्य रसिकप्रियानाम भाषाटीकायां षष्ठः सर्गः ॥ ६ ॥

## अथ सप्तमः सर्गः प्रारभ्यते ॥

### अब सातवां सर्ग आरंभ होताहै ।

अधुना चंद्रोदयव्याजेन राधाया विरहव्यथाधिक्यं वर्णयन्नाह—

श्लोकः ॥ अत्रांतरे च कुलटाकुलवर्त्मपातसंजात
पातक इव स्फुटलांछनश्रीः ॥ वृंदावनांतरमदी-
पयदंशुजालैर्दिक्सुंदरीवदनचंदनबिंदुरिंदुः ॥ १ ॥

सं० टी०—अत्रांतरइति । अत्रांतरेऽस्मिन्नवसरे इंदुश्चंद्रः अंशुजालैः किरणस-मूहैः वृन्दावनांतरं वृन्दावनमध्यप्रदेशं अदीपयत् प्रकाशितवान् । विप्रलं-भहेतुत्वं दर्शयन् विशिनष्टि । कीदृशइंदुः स्फुटा व्यक्ता लांछनश्रीः कलंक शोभा यस्य कथंभूतइव कुलटानां कृष्णाभिसारिकाणां कुलस्य समूहस्य वर्त्म-पातः संकेतमार्गप्रतिरोधस्तेन संजातमुत्पन्नं पातकं यस्य तादृश इव । कुपातक-तः कलंको व्यक्तो भवतीति चंद्रस्योद्दीपनत्वमाह । पुनः कीदृशः दिश एव सुंदर्यः मायिकास्तासां वदनस्य मुखस्य चंदनबिंदुः श्रीखंडतिलक इव स्त्रीति-लको वर्तुलो भवति असतीनां चंद्रोदये गमनाभावाद्धर्मपातः । अत्र रूपकोत्प्रे-क्षेलंकृती ॥ १ ॥

भा० टी०—इसीसमयमें श्रीकृष्णके संग भोग करनेवाली कुलटा स्त्रियोंके संकेत स्था-नका प्रतिरोध(रोंकने)करके प्राप्तहुए पातकवालेकी तरह और प्रकटहुई कलंककी शोभावाला, दिशारूप सुंदरियोंके मुखोंकी चंदन बिंदुसरीखा, चंद्रमा किरणसमूहोंकरके वृंदावनके मध्य प्रदेशको (दीप्त) प्रकाशित करता भया ॥ १ ॥

श्लोकः ॥ प्रसरति शशधरबिंबे विहितविलंबे च माधवे मधुरा ॥
विरचितविविधविलापं सा परितापं चकारोच्चैः ॥ २ ॥

सं०टी०—अत्र विप्रलब्धा नायिका वर्ण्यते तल्लक्षणं भरतेनोक्तं “ प्रविलस-दनुरागा दूतिकां प्रेक्ष्य पूर्वं सरभसमपिधाय क्वापि संकेतभूमौ । न मिलति खलु

यस्या वल्लभो दैवयोगात्प्रवदति भरतस्तां नायिकां विप्रलब्धां" । प्रसरतीति । सा राधा विरचितः कृतः विविधो नानाप्रकारो विलापो यत्र उच्चैर्महांतं परितापं दुःखं चकार कृतवती । क्सति शशधरबिंबे चंद्रमंडले प्रसरति उद्गच्छति सति । माधवे कृष्णे विहितविलंबे संकेतागमनंप्रति कालातिक्रमं कृतवति सति ॥ २ ॥

भा० टी०—चंद्रमंडल प्रकटहुए पर और श्रीकृष्णके आनेमें विलंब हुएपर वह मधुर मनोहर ( राधा ) अनेक प्रकारके विलापयुक्त बडाभारी संताप करती भई ॥ २ ॥

अथ त्रयोदश प्रबंधो गौडमालवरागेण प्रतिमंठताले गीयते.

अब तेरहवां प्रबंध गौड़ मालव रागकरके प्रतिमंठ तालमें गाया जाताहै—

विलापमेव गीतेनाह—

कथितसमयेऽपि हरिरहह न ययौ वनम् ॥
मम विफलमेतदनुरूपमपि यौवनम् ॥ १ ॥
यामि हे कमिह शरणं सखीजनवचनवंचिता ॥ ध्रु०

सं० टी०—कथितेति । गीतस्यास्य मालवगौडीरागः प्रतिमंठस्तु तालः । हे इति स्वचित्तसंबोधनं इह निर्जने वने सखीजनस्य वचनैः कृष्णागमनावेदकैर्वंचिता प्रतारिता अहं कं पुरुषं शरणं रक्षितारं यामि गमिष्यामि किंतु कमेव जलमेव शरणं यामि । जलप्रवेशो वरमित्यर्थः । किमित्यत आह अहहेत्याश्चर्ये हरिः कृष्णः कथितसमयेपि उक्तकालेपि वनं वृंदावनं संकेतस्थानं न ययौ न जगाम कृष्णोपभोगाभावात् ममैतदनुरूपं योऽयमपि यौवनं विफलं निरर्थकम् ॥ १ ॥

भा० टी०—हे चित्त । इस वनमें सखीजनोंके वचनोंसे ठगीहुहे ( मैं ) किसकी शरण जाऊं किंतु, कं शरणं यामि, अर्थात् जलकीही शरण जाती हूं जलमें डुबतीहूं, क्योंकि, बडा आश्चर्य है कि कहे हुए समय परभी श्रीकृष्ण इस वृंदावनमें नहीं आये मेरा यह अनुयोग्य इस समयका भी यौवन वृथा भया ॥ १ ॥

यदनुगमनाय निशि गहनमपि शीलितम् ॥
तेनमम हृदयमिदमसमशरकीलितम् ॥ २ ॥

सं० टी०—यदिति । मया यस्य कृष्णस्यानुगमनाय सुरतेन संतोषयितुं निशि रात्रौ गहनमपि निर्जनवनमपि शीलितं सेवितं तेन कृष्णेन हेतुना मम इदं हृदयं मदीयं चित्तं असमशरेण कामेन कीलितं विद्धं कृष्णागमनाभावात् ॥ २॥

भा० टी–(मैंने) जिसके संग मैथुनकी इच्छाके वास्ते रात्रीमें गव्हरवन भी सेवित किया तिस श्रीकृष्णने, मेरा यह हृदय (मन) कामदेवके बाणसे बींध दिया ॥ २ ॥

मम मरणमेव वरमतिवितथकेतना ॥
किमितिविषहामि विरहानलमचेतना ॥ ३ ॥

सं० टी०—ममेति । इह वने अचेतना ज्ञानशून्या विरहानलं वियोगाग्निं किमिति विषहामि सहामि तस्मान्मम मरणमेव वरं श्रेष्ठं । मरणे विरहानलाभावात् । कीदृशी अहं अतिवितथं अतिव्यर्थमेव शरीरं यस्याः । कृष्णेन शरीरसौंदर्योपभोगाभावात् ॥ ३ ॥

भा० टी०–ज्ञानशून्य हुई (और) अत्यंत व्यर्थ शरीरवाली (मैं) इस, विरहरूप अग्निको क्यों ऐसे सहलूंगी ! इसलिये, मेरा मरनाही श्रेष्ठहै ॥ ३ ॥

मामहह विधुरयति मधुरमधुयामिनी ॥
कापि हरि मनुभवति कृतसुकृतकामिनी ॥ ४ ॥

सं० टी०—मामिति । अहहेति दुःखानुकारे मधुरमधुयामिनी मनोज्ञा वसंतरात्रिर्मां विधुरयति विलक्षयति । कापि कृतं सुकृतं पुण्यं यया तादृशी कामिनी कांता हरिं कृष्णमनुभवति उपभुंक्ते ॥ ४ ॥

भा० टी०–(अहह) बड़ा खेद है कि मनोहर वसंतसमयकी रात्री मुझको अत्यंत वियोगिनी करतीहै दुःख देतीहै, और कोईक ही सुकृत करनेवाली (कामिनी) गोपी श्रीकृष्णके साथ रमण करतीहै ॥ ४ ॥

अहह कलयामि वलयादिमणिभूषणम् ॥
हरिविरहदहनवहनेन बहुदूषणम् ॥ ५ ॥

सं०टी०—अहहेति। अहं वलयादिमणिभूषणं कंकणप्रभृतिमुक्तालंकारं हरिविरहदहनवहनेन कृष्णावियोगधारणेन हेतुना बहुदूषणं अतिशयपरं कलयामि मन्ये । प्रियदर्शनेन स्त्रीणामलंकारसाफल्यमितिभावः ॥ ५ ॥

भा० टी०-( अहह ) बड़ा खेदहै ( मैं ) कंगणआदि मोतियोंके आभूषणको भी श्रीकृष्णके विरह धारण हेतुसे बहुत बुरा मानतीहूं ॥ ५ ॥

कुसुमसुकुमारतनुमतनुशरलीलया ॥
स्रगपि हृदि हंति मामतिविषमशीलया ॥ ६ ॥

सं० टी०—कुसुमेति । स्रगपि पुष्पमालापि अतनुशरलीलया कंदर्पबाणविलासेन मां हृदि हंति । कीदृशीं मां कुसुमवत् सुकुमारा कोमला तनुः शरीरं यस्याः सा । कीदृश्या अतनुशरलीलया अतिविषमं अतिदारुणं शीलं स्वभावो यस्याः तया । बाणेन हि क्षतं क्रियते न पुष्पादिना ॥ ६ ॥

भा० टी०—पुष्पसरीखी सुकुमार अंगवाली मुझको पुष्पोंकी मालाभी अति दारुण स्वभाववाली कामदेवकी बाण लीलाकरके हृदयमें बांधा करती है ॥ ६ ॥

अहमिह निवसामि न गणितवनवेतसा ॥
स्मरति मधुसूदनो मामपि न चेतसा ॥ ७ ॥

सं० टी०—अहमिति । गणितवनवेतसा गणिताः प्रतिवनं कृष्णमन्वेषयंत्या परिसंख्याताः वनवेतसवृक्षा यया सा अहं इह कुंजे किं न निवसामि अपि तु वसाम्येव । अहं तु न समर्था शिरश्चालनेपि एवं विधामपि मां मधुसूदनः कृष्णश्चेतसापि न स्मरति आश्चर्यमित्यर्थः ॥ ७ ॥

भा० टी०—कृष्णको ढूंढ़नेके समय, वनके वेतोंको गिनतीहुई मैं (क्या) यहां नहीं बसूंगी? किंतु, वासही करूंगी, ऐसी, मुझको श्रीकृष्ण चित्तकरके भी नहीं स्मरण करताहै ॥ ७ ॥

हरिचरणशरणजयदेवकविभारती ॥
वसतु हृदि युवतिरिव कोमलकलावती ॥ ८ ॥
इति श्रीगीतगोविंदे त्रयोदशः प्रबंधः ॥ १३ ॥

सं० टी०—हरीति । हरिच्चरणौ रक्षितारौ यस्य स चासौ जयदेवकविस्तस्य भारती गीतरूपा सरस्वती भक्तानां हृदि मनसि वसतु । कीदृशी भारती कोमला अनिष्ठुरवर्णा कलावती कवित्वकलायुक्ता च । केव युवतिरिव । यथा

नायकहृदये कोमलकलावती सुकुमारांगी चतुःषष्टिकामकलायुक्ता च नायिका वसति ॥ ८ ॥

भा० टी०—विष्णुभगवान्के चरणोंसेही रक्षितहुए जयदेव कविकी सरस्वती भक्तोंके, हृदयमें वास करो जैसे कोमल कलावाली कामिनी हृदयमें वास करतीहै, तैसेही सरल कवितावाली यह सरस्वती है ॥ ८ ॥ इतिश्रीगीतगोविंदस्य रसिकप्रियानाम भाषाटीकायां त्रयोदशःप्रबंधः ॥ १३ ॥

कृष्णस्य विलंबे तर्कमाह—

**श्लोकः ॥ तत्किं कामपि कामिनीमभिसृतः किंवाकलाकेलिभिर्बद्धो बंधुभिरंधकारिणि वनोपांते किमु भ्राम्यति ॥ कांतः क्लांतमना मनागपि पथि प्रस्थातुमेवाक्षमः संकेतीकृतमंजुवंजुललताकुंजेपियन्नागतः ॥ १ ॥**

सं० टी०—तत्किमिति । कांतः कृष्णः संकेतीकृतः अभिसरणस्थानं संपादितः यो मंजुर्मनोहरः वंजुललताकुंजः वेतसलता गृहं तस्मिन्नपि यस्मान्नागतः नायातः तस्मात्कारणात्कामपि कामिनीं नायिकामभिसृतः तदभिमुखं गतः । किंवाथवा बंधुभिर्मित्रैः कलाकेलिभिः हास्यादिक्रीडाभिर्बद्धः यंत्रितः । अथवा अंधकारिणि तमोयुक्ते वनोपांते किं भ्राम्यति तमसि मार्गभ्रमात् भ्रमणं युज्यत एव । अभ्यस्तस्य भ्रमाभावइतिचेत्तत्राह क्लांतमनाः मन्निमित्तं समाकुलमंतःकरणं यस्य तथाविधः सन् पथि मनागपि अल्पमपि प्रस्थातुं आगंतुमक्षमः किं असमर्थः किं । अत्र अपिशब्दः किमर्थः । उक्ता चेयं नायिका "उक्ता भवति सा यस्याः संकेतं नागतः प्रियः । तस्यानागमने हेतुं चिंतयन्त्याकुला यथेति ।" संशयाक्षेपालंकारोऽयम् ॥ १ ॥

भा० टी०—जोकि प्रियपति श्रीकृष्ण, संकेत किये हुए मनोहर वेतलता कुंजगृहमें भी नहीं आये इसलिये क्या किसी भी अन्यगोपिसे रमण करने लग गये अथवा मित्रोंके संग हास्यक्रीड़ा आदिकी वातोंसे रुक गये अथवा अंधकारवाले वनके समीपही

भ्रमते फिरते हैं मेरे निमित्त व्याकुल चित्तवाले हुए अल्प(जरा) भी मार्गमें आनेको ही असमर्थ होगये क्या ? ॥ १ ॥

श्लोकः ॥ अथागतां माधवमंतरेण सखीमियं
वीक्ष्य विषादमूकाम् ॥ विशंकमाना रमितं
कयापि जनार्दनं दृष्टवदेतदाह ॥ २ ॥

सं० टी०—अथेति । अथानंतरं इयं राधा माधवं कृष्णमंतरेण विनागतां सखीं वीक्ष्य दृष्ट्वा एतद्गीतेन वक्ष्यमाणमाह । कीदृशीं सखीं विषादेन कार्यासिद्ध्या मूकां वक्तुमक्षमां । कीदृशी राधा जनार्दनं कृष्णं कयापि कामिन्या रमितं क्रीडितं विशंकमाना तर्कयंती । कथं दृष्टवत् कामिन्या सहितं कृष्णं दृष्ट्वेत्यर्थः । यद्वा दृष्ट्वाभिधीयते तथा प्राहेत्यर्थः । उक्तिरेषा उन्मादतः । अत्रोपेंद्रवज्रा वृत्तम् ॥ २ ॥

भा० टी०—इससे अनंतर यह ( राधा ) कार्यसिद्धि हुए विना चुपकी हुई श्रीकृष्णके विना आईहुई सखीको देखके किसीक ही अन्यगोपीके संग रमण करतेहुए श्रीकृष्णको देखके सशंक जैसे कहतीहो तैसे यह कहती भई ॥ २ ॥

अथ चतुर्दशप्रबंधो वसंतरागेण एकतालीताले गीयते

अब चौदहवां प्रबंध वसंतरागकरके एकतालीतालमें गायाजाताहै—

दृष्टवदित्युक्तं तद्गीतेनाह ।

स्मरसमरोचितविरचितवेषा ॥ गलितकुसुमदलविलु-
लितकेशा ॥ १ ॥ कापि चपला मधुरिपुणा विल-
सति युवतिरधिकगुणा ॥ ध्रु० ॥

सं० टी०—स्मरेति । गीतस्यास्य वसंतरागः । हे सखि कापि युवतिः कामिनी मधुरिपुणा कृष्णेन सह विलसति क्रीडति । कीदृशी सा अधिकगुणा अतिशयितसौंदर्यादिगुणैर्युक्ता स्मरसमरोचितः कामयुद्धयोग्यः विरचितः कृतः वेषोलंकारादिर्यया सा । पुनः कीदृशी गलितानि कुसुमानि येभ्यस्तादृशाः दलविलुलिता ईषदितस्ततो व्यस्ताः केशाः यस्याः सा विपरीतरतियुक्ता ॥ १ ॥

भा० टी०—हे सखि! कोईक भी अधिक गुणवाली कामदेवके युद्धको योग्य वेष बनानेवाली खँशेहुए पुष्प और कछुक खुलेहुए केशोंवाली चंपल कामिनी कृष्णके संग क्रीड़ा करती है ॥ १ ॥

हरिपरिरंभणवलितविकारा ॥
कुचकलशोपरितरलितहारा ॥ २ ॥

सं० टी०—हरेः परिरंभणेनालिंगनेन वलितः संभक्तो ललितो मनोहरो वा विकारः कामभावो यस्याः सा कुचकलशयोरुपरिस्तनघटयोर्मस्तके तरलितश्चंचलो हारो यस्याः सा ॥ २ ॥

भा० टी०—श्रीकृष्णके आलिंगन करनेसे मनोहर कामभाववाली कुचकलशों पर हिलतेहुए हारवाली ॥ २ ॥

विचलदलकललिताननचंद्रा ॥
तदधरपानरभसकृततंद्रा ॥ ३ ॥

सं० टी०—विचलदिति । विचलद्भिः कंपमानैरलकैः चूर्णकुंतलैः ललितः सुंदरः आननचंद्रो मुखचंद्रो यस्याः सा । पुनः कीदृशी तस्य कृष्णस्य ओष्ठपानहर्षेण कृता तंद्रा रतिसुखानुभवनिद्रा यया सा ॥ ३ ॥

भा० टी०—( और ) कांपतीहुई अलकोंकरके सुंदर मुखचंद्रवाली श्रीकृष्णके अधरामृत (ओष्ठचुंबनके हर्ष)से (तंद्रा) रतिसुखकी अनुभवरूप निद्रा से युक्त हुई ॥ ३ ॥

चंचलकुंडलदलितकपोला ॥
मुखरितरशनजघनगतिलोला ॥ ४ ॥

सं० टी०—चंचलेति । चंचलाभ्यां कुण्डलाभ्यां दलितौ संघृष्टौ कपोलौ यस्याः सा । पुनः कीदृशी मुखरिता शब्दसहिता रशना कांची यस्मिन् जघने तस्य गत्या चांचल्येन लोला चंचला ॥ ४ ॥

भा० टी०—चंचल कुंडलोंकरके स्पर्शित कपोलोंवाली और बाजती हुई तागड़ीयुक्त जांघोंकी गतिसे चंचल हुई ॥ ४ ॥

दयितविलोकितलज्जितहसिता ॥
बहुविधकूजितरतिरसरसिता ॥ ५ ॥

सं० टी०—दयितेति । दयितस्य कृष्णस्य विलोकितेन मुखवीक्षणेन लज्जितं संजातलज्जं हसितं हास्यं यस्याः सा । पुनः कीदृशी बहुविधं पिकशिखिकलहंसादीनामिव नानाप्रकारकूजितं यत्र एतादृशोरतिरसः क्रीडारसस्तेन रसिता हृष्टा ॥ ५ ॥

भा० टी०—श्रीकृष्णके मुख देखनेसे लज्जा सहित हास्यवाली बहुत प्रकारसे कूजन ( शब्द ) करके मैथुनके रससे प्रसन्न हुई ॥ ५ ॥

विपुलपुलकपृथुवेपथुभंगा ॥
श्वसितनिमीलितविकसदनंगा ॥ ६ ॥

सं० टी०—विपुलेति । विपुला बहुलाः पुलका रोमांचा यस्याः पृथुर्महान् वेपथुः कंपो भंग इव यस्याः सा । च पुनः कीदृशी श्वसितं सुरतायासेन जनितो निःश्वासः निमीलितं परमानदावाप्त्या जनितं नेत्रनिमीलितं च ताभ्यां विकसन् प्रकटीभवन् अनंगः कामो रेतोलक्षणो यस्याः सा । निमीलितेत्यनेन च्युतकालः सूचितः ॥ ६ ॥

भा० टी०—बहुतसी रोमावली खड़ी हैं और तरंग सरीखा बहुतसा कंपवाली और रतिके परिश्रमसे, श्वास तथा नेत्रोंके मींचन करके प्रकटहुए कामदेववाली अर्थात् वीर्य क्षरणसमयवाली ॥ ६ ॥

श्रमजलकणभरसुभगशरीरा ॥
परिपतितोरसि रतिरणधीरा ॥ ७ ॥

सं० टी०—श्रमेति । श्रमजलकणभरेण सुरतायासघर्मजलाधिक्येन सुभगं मनोज्ञं शरीरं यस्याः सा । एतेन सात्विकभावोत्पत्तिः सूचिता सात्विका भावाः पूर्वमुक्ताः । पुनः कीदृशी उरसि परिपतिता कृष्णवक्षःस्थलं प्राप्य स्थिता रतिः सुरतं रण इव तत्र धीरा ॥ ७ ॥

भा० टी०—विषयके परिश्रमसे प्राप्तहुए पसीनोंके किणकोंकी अधिकता करके मनोहर अंगवाली, श्रीकृष्णकी छातीपर प्राप्तहुई, रमणमें रणकी तरह धीरजवाली ऐसी कोइक चपल गोपी तिस श्रीकृष्णचंद्रके संग रमण करती है ॥ ७ ॥

**श्रीजयदेवभणितं हरिरमितम् ॥**
**कलिकलुषं जनयतु परिशमितम् ॥ ८ ॥**
**इति श्रीगीतगोविंदे चतुर्दशः प्रबंधः ॥ १४ ॥**

सं० टी०–श्रीजयदेवेति । श्रीजयदेवेन भणितमुक्तं वर्णितमित्यर्थः । यद्धरेः रमितं कृष्णस्य संभोगः तत्कलेः कालियुगस्य कलुषं पापं गायकानां श्रोतॄणां च परिशमितं शांतं जनयतु शमनं करोतु ॥ ८ ॥

भा० टी०–श्रीजयदेवकविसे कहाहुआ यह, श्रीकृष्णचंद्रका रमण भक्तजनोंके कलियुगसे उत्पन्नहुए पापोंको शांत करो ॥ ८ ॥

इतिश्रीकविराज० गीत० महाकाव्य० र० नाम भाषाटीकायां चतुर्दशः प्रबंधः ॥१४॥

**श्लोकः ॥ विरहपांडुमुरारिमुखांबुजद्युतिरयं तिरय-**
**न्नपि वेदनाम् ॥ विधुरतीव तनोति मनोभुवः**
**सुहृदये हृदये मदनव्यथाम् ॥ १ ॥**

सं० टी०–विरहेति । अये हे सखि । चन्द्रदर्शनविषादेन सखींप्रति ब्रूते । अयं विधुश्चंद्रः मम हृदये मदनव्यथां कामपीडां अतीवात्यर्थेन तनोति विस्तारयति । उद्दीपकविभावनत्वात् कीदृशो विधुः विरहेण मद्वियोगेन पांडु धूसरं यन्मुरारेः मुखांबुजं कृष्णस्य वदनकमलं तस्य द्युतिरिव द्युतिर्यस्य सः । पुनः कीदृशः वेदनामपि तिरयन् आच्छादयन् यथा । जनकत्वे हेतुमाह । मनोभुवः कामस्य सुहन्मित्रम् ॥ १ ॥

भा० टी०–अये हे सखि! विरहसे पीलेहुए श्रीकृष्णके मुखकमलकी कांतिसरीखी कांतिवाला यह संतापको आच्छादित करताहुआ भी कामदेवका मित्र चंद्रमा मेरे, हृदयमें अत्यंत कामकी बाधाको बढ़ाताहै ॥ १ ॥

अथ पंचदशप्रबंधो गुर्जरीरागेण एकतालीताले गीयते.

अब पंदरहवां प्रबंध गुंजरी रागकरके एकताली तालमें गाया जाता है–

पूर्वगीतेन कस्याश्चिद्विपरीतस्तदुक्तं अधुना कस्याश्चित्स्वाधीनभर्तृकाया नायककर्तृकां क्रीडामाह—

**संमुदितमदने रमणीवदने चुंबनवलिताधरे ॥ मृगमदतिलकं लिखति सपुलकं मृगमिव रजनीकरे ॥ १ ॥ रमते यमुनापुलिनवने विजयी मुरारिरधुना ॥ ध्रु० ॥**

सं० टी०—समुदितेति । स्वाधीनभर्तृकालक्षणं "यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुंचति । विचित्रविभ्रमैर्युक्ता स्वाधीनपतिका यथा" इति । गुर्जरीरागः। हे सखि अधुना अस्मिन्काले यमुनापुलिने यद्वनं तस्मिन् विजयी जयशीलो मुरारिः कृष्णो रमते क्रीडति । कथं रमत इत्यत आह रम्यतेस्यामितिरमणी तस्याः मुखे सपुलकं रोमांचसहितं यथा स्यात्तथा मृगमदतिलकं कस्तूर्याः तिलकं लिखति । कीदृशे वदने समुदितः समुपाचितः मदनः कामो यत्र सकाम इत्यर्थः । चुंबनेन वलितः सुमुखीकृत्य संकोचितः अधरो यस्य तस्मिन् चुंबनं दत्त्वा तिलकं लिखतीत्यर्थः । कस्मिन् कइव रजनीकरे चंद्रे मृगमिव लिखतीत्यर्थः ॥ १ ॥

भा० टी०-हे सखि! अब विजयी मुरनामदैत्यके शत्रु श्रीकृष्ण यमुनाजीके निकट वनमें क्रीड़ा कर रहे हैं कैसे कि, कामदेवसे युक्त हुए और चुंबनसे संकुचित अधर ओष्ठवाले रमणी (गोपि) के मुखपर रोमांच सहित हो जैसे तैसे कस्तूरिका तिलक बनाते हैं सो चंद्रमाविषे मृग (कलंक) ही मानों दीखता है ॥ १ ॥

**घनचयरुचिरे रचयति चिकुरे तरलिततरुणानने ॥ कुरबककुसुमं चपलासुषमं रतिपतिमृगकानने ॥ २ ॥**

सं० टी०—घनेति । तस्याः घनचयरुचिरे मेघसमूहमनोहरे चिकुरे केशे । जातावेकवचनं । कुरबककुसुमं अम्लानं पुष्पं वा कोटिपुष्पं वा रचयति यथास्थानमर्पयति । पुनः कीदृशे तरलितानि चंचलीकृतानि तरुणानामाननानि मुखानि येन । अतिसुंदरतया वीक्षणार्थं । कीदृशं कुसुमं चपलावत् विद्युदिव

सुषमा शोभा यस्य लक्ष्यलक्षितया लोहितत्वाच्च विद्युत्साम्यं । पुनः कीदृशे रतिपतिः कामः स एव मृगस्तस्य कानने यथा मृगवासो वने तथा चिकुरे काम इति कामजनके इत्यर्थः । अस्मिन्नेव मेघे विद्युद्भवति तरुणानां मेघसमयः कामजनक इति । घनोदये हरिणानामतिसुखमुत्पद्यते ॥ २ ॥

भा० टी०—और तिस गोपिके मेघसमूहकी तरंह मनोहर, जवान पुरुषोंके मुखोंको चंचल करनेवाले, कामदेवरूपी मृगको वनकी तरंह वास देनेवाले, ऐसे केशोंपर बिजलीकी तरँह शोभावाले, कुरबकपुष्प ( लाल कोरंटा पुष्प ) को गूँथते हैं ॥ २ ॥

**घटयति सुघने कुचयुगगगने मृगमदरुचिरूषिते ॥**
**मणिसरममलं तारकपटलं नखपदशशिभूषिते ॥ ३ ॥**

सं टी०—घटयतीति । सुघने निबिडे कुचयुगगगने स्तनद्वयाकाशे अमलं निर्मलं मणिसरं मुक्ताहारमेव तारकपटलं नक्षत्रसमूहं घटयति योजयति । मृगमदरुचिः कस्तूरिकादीप्तिस्तया रूपिते । पुनः कीदृशे नखपदं नखक्षतं तदेव शशी द्वितीयाचंद्रस्तेन भूषिते अलंकृते । गगनपक्षे शोभिता घनामेघा यस्मिन्नित्यभूतोपमार्थम् ॥ ३ ॥

भा० टी०—सुघन, सुंदर कठोर कस्तूरीकी दीप्तिसे लिप्त, नखच्छेदरूपी टेढे चंद्रमासे विभूषित, कुचयुगलरूप गगन मंडल पर निर्मल मोतियोंके हारकोही नक्षत्र समूह सरीखा शोभित करतेहैं ॥ ३ ॥

**जितबिसशकले मृदुभुजयुगले करतलनलिनीदले ॥**
**मरकतवलयं मधुकरनिचयं वितरति हिमशीतले ॥ ४ ॥**

सं० टी०—जितेति । मृदुभुजयुगले कोमलबाहुद्वये मरकतवलयं मरकतखचितकंकणमेव मधुकरनिचयं भ्रमरसमूहं वितरति ददाति विरचयतीत्यर्थः । कीदृशे भुजयुगले जितबिसशकले जितं सदृशीकृतं मृणालखंडं येन । पुनः कीदृशे करतलमेव नलिनीदलं पद्मपत्रं यत्र हिमवत् शीतले संतापहरत्वात् पद्मिनीपत्रयुक्ते बिसशकले भ्रमरसमूहास्तिष्ठतीति । रूपकालंकारः ॥ ४ ॥

भा० टी०—और कमलकंदके खंडसेभी उत्तम शोभावाले हथेलीरूप कमलपत्रोंवाले, बरफके समान शीतल, कोमल भुजयुगलमें नीलमणि जड़ित कंकणको ऐसे पहिनाते हैं मानो भ्रमर समूहको देते हैं ॥ ४ ॥

**रतिगृहजघने विपुलापघने मनसिजकनकासने ॥**
**मणिमयरशनं तोरणहसनं विकिरति कृतवासने ॥ ५ ॥**

सं० टी०—रतीति । रतेः शृंगारस्य गृहे आश्रये जघने नितंबे मणिमयरशनं मुक्तामयीं मेखलां विकिरति ददाति । कीदृशे जघने विपुलं महत्तरं अपघनं शरीरं यस्य अतिमांसल इत्यर्थः । पुनः कीदृशे मनसिजस्य कामस्य कनकनिर्मिते सिंहासने इव । कीदृशं मणिमयरशनं तोरणस्य वंदनमालिकाया हसनं उपहासो यस्मात् । यदा राजा सिंहासने उपविशति तदा वंदनमालिका बध्यते । पुनः कीदृशे कृतं दत्तं वासनं वस्त्रं यस्मिन् । वस्त्रोपरि मेखलां बध्नातीत्यर्थः । यद्वा कृतं कामेन वासनं स्थानं यत्र तादृशे ॥ ५ ॥

भा० टी०—अत्यंत मोठे कामदेवको सुवर्णका सिंहासन सरीखे वस्त्र पहिनाये हुए कामका घररूप नितंबोंपर वंदनवारके सरीखे उपहास्यवाली मणिजड़ित तागड़ीको बांधतेहैं॥५॥

**चरणकिसलये कमलानिलये नखमणिगणपूजिते ॥**
**बहिरपवरणं यावकभरणं जनयति हृदि योजिते ॥ ६ ॥**

सं० टी०—चरणेति । चरणकिसलयं पदमेव पल्लवं तस्मिन् यावकभरणं अलक्तकपूरणं जनयति करोतीत्यर्थः । कीदृशे चरणकिसलये हृदि योजिते कृष्णानुरागातिशयात् स्वहृदयप्रापिते स्वहृदये तस्याश्चरणं कृत्वा यावकं रचयतीत्यर्थः । कीदृशे हृदि कमलायाः निलये आश्रये । कीदृशे किसलये नखा एव मणिगणाः पुष्परागादिरत्नसमूहास्तैः पूजिते अर्चिते । कीदृशं यावकभरणं बहिरपवरणं बाह्यमाच्छादकं यत्ताद्दितरतीति ॥ ६ ॥

भा० टी०—हे सखि! जहां लक्ष्मीका निवासहै ऐसे हृदयमें लगाये हुए नखरूप मणिगणों करके पूजित, शोभित ऐसे तिसके, चरणपत्रोंपर बाह्य भागकी आच्छादक यावक अर्थात् महाउर अथवा मेंहदीको लगाते हैं ॥ ६ ॥

रमयति सुदृशं कामपि सदृशं खलहलधरसोदरे ॥
किमफलमवसं चिरमिह विरसं वद सखि विटपोदरे ॥ ७ ॥

सं॰ टी॰—रमयतीति । हे सखि खले दुर्जने बलभद्रस्य सोदरे भ्रातरि कृष्णे कामपि सुदृशं शोभने दृशौ नेत्रे यस्यास्तां नायिकां । सदृशं यौवनरूपगुणादिभिस्तुल्यं यथा स्यात्तथा रमयति सति इह विटपोदरे लतागृहे अफलं निष्प्रयोजकं विरसं रसरहितं यथा स्यात्तथा चिरं बहुकालं किमवसंस्थितास्मि हे सखि त्वं वद कथय । हलवाहकस्य सोदर इति साभिप्रायं खल इति क्रोधविभावना ॥ ७ ॥

भा॰ टी॰—हे सखि! दुष्ट हलधरके सोदर भाई, किसीक भी सुंदर नेत्रवालीके संग यौवनादि तुल्य रमण करचुके तब ईस लतागृहमें निष्प्रयोजन बहुत कालतक क्या वृथा वसूं, तुम कहो ॥ ७ ॥

इह रसभणने कृतहरिगुणने मधुरिपुपदसेवके ॥
कलियुगचरितं न वसतु दुरितं कविनृपजयदेवके ॥ ८ ॥
इति श्रीगीतगोविंदे पंचदशः प्रबंधः ॥ १५ ॥

सं॰ टी॰—इह मयि कवीनां नृपे जयदेवके कलियुगे चरितमाचरितं कलियुगेन चरितं वा दुरितं पापं न वसतु न तिष्ठतु । प्रार्थनायां लोट् । कीदृशे रसस्य शृंगाररसस्य भणनं कथनं यस्य मधुरिपोः कृष्णस्य चरणसेवके । कर्तरि यक् । अतएव कृतं हरेर्गुणानां गुणनं चिंतनं येन ॥ ८ ॥

भा॰ टी॰—शृंगार रसको कहनेवाले, हरिगुण कथन करनेवाले, मधुनामदैत्यके शत्रु श्रीकृष्णचंद्रजीके चरणोंके सेवक कविराज, जयदेवनामक ईस मेरे विषें कलियुगके आचरित पाप नहीं वसो ॥ ८ ॥

इति श्रीगीतगोविंदस्य रसिकप्रियानाम भाषाटीकायां पंचदशः प्रबंधः ॥ १५ ॥

कृष्णस्यानागमनात् दुःखितां सखीमाश्वासयंत्याह—

श्लोकः ॥ नायातः सखि निर्दयो यदि शठस्त्वं दूति
किं दूयसे स्वच्छंदं बहुवल्लभः स रमते किं तत्र ते दू-

षणं ॥ पश्याद्य प्रियसंगमाय दयितस्याकृष्यमाणं गुणैरुत्कंठार्तिभरादिव स्फुटदिदं चेतः स्वयं यास्यति ॥ १ ॥

सं० टी०—नायात इति। हे सखि हे दूति दौत्यकर्मकुशले यदि निर्दयः दयारहितः शठः धूर्तो वंचकः कृष्णो नायातः तर्हि किं त्वं दूयसे संतप्ता भवसि। अनागमने कारणमाह बह्व्यो वल्लभाः स्त्रियो यस्य सः कृष्णः स्वच्छंदं स्वेच्छया तत्र स्थाने रमते क्रीडति ते तव किं दूषणं कः अपराधो न कोपीत्यर्थः। तर्हि कथमत्रागमिष्यतीत्यत आह पश्याति हे सखि अद्येदानीं मम इदं चेतो मनःप्रियसंगमाय कृष्णसंभोगार्थं स्वयमेव यास्यति इति त्वं पश्य जानीहि। कीदृशं चेतः दयितस्य कृष्णस्य गुणैः सौंदर्यादिभिः आकृष्यमाणं वशीकृतं। पुनः कीदृशं उत्कंठा औत्सुक्यं आर्तिः कामपीडा तयोः भरोतिशयस्तस्मादिव स्फुटत् बहिर्भवत् अपरमपि वस्त्वंतरसंकुले स्थाने स्थितं वस्तु सांकर्याद्बहिर्भवतीति स्फुटत् विदलादिति वा अन्योपि गुणैरज्जुभिराकृष्टः सन् प्रयातीति। अत्रोत्प्रेक्षालंकारः ॥ १ ॥

भा० टी०—हे सखि! यदि निर्दयी शठ श्रीकृष्ण, नहीं आये तो हे दूती! तुम क्यों दुःख पातीहो बहुतसी गोपियोंसे प्यार करनेवाला वह इच्छापूर्वक तिसही स्थानमें, रमताहै तुम्हारा क्या दोषहै अब उत्कंठा और कामकी पीड़ाके भारसे प्रकट होताहुआकी तरह प्रियके गुणोंकरके खिंचा हुआ यह (मेरा) चित्त प्रियपतिके संग रमण करनेके वास्ते आपही जावेगा देखो ॥ १ ॥

अथ षोडशप्रबंधो देशांकरागेण रूपकताले गीयते.

अब सोलहवां प्रबंध देशांकराग करके रूपकतालमें गाया जाता है—
(यह गीत संभोग और वियोग दोनों पक्षमें है)

अनिलतरलकुवलयनयनेन ॥ तपति न सा किसलयशयने न ॥ सखि या रमिता वनमालिना ॥ ध्रु० ॥

सं० टी०—अनिलेति। देशांकरागः। हे सखि या नायिका वनमालिना कृष्णेन रमिता क्रीडिता सा किसलयशयने नवपल्लवशय्यायां न तपति नोपतप्ता

भवति । अथवा या वनमालिना अरमिता मादृशी सा किसलयशयने न तपति अपितु तपत्येवेति काका । कीदृशेन वनमालिना अनिलेन वायुना तरलं चंचलं यत्कुवलयं नीलोत्पलं तद्वत् नयने यस्य सः । तेन सार्द्धं रसावलोकनादिति भावः । अस्मिन् गीते संभोगवियोगौ ज्ञातव्यौ ॥ १ ॥

भा० टी०–हे सखि जो ( नायिका ) गोपी वायुसे चंचल हुए नीलकमलसरीखे नेत्रोंवाले श्रीकृष्णकरके रमी गई वह पत्तोंकी शय्यापर नहीं तप्त होती है ( नं ) यह काकुशब्द वियोगपक्षमें है कि जो मेरे माफक नहीं रमी गई हो तो वहभी संतप्तही होती होगी ॥ १ ॥

विकसितसरसिजललितमुखेन ॥
स्फुटति न सा मनसिजविशिखेन ॥ २ ॥

सं० टी०–विकसितेति । विकसितं प्रफुल्लितं यत्सरसिजं कमलं तद्वन्मनोहरं ललितं आननं यस्य स एवंभूतेन वनमालिना या रमिता सा मनसिजविशिखेन कामबाणेन न स्फुटति न द्विधा भवतीति संभोगे । वियोगे तु न स्फुटत्येवेति काका ॥ २ ॥

भा० टी०–खिलेहुए कमलसरीखे मनोहर मुखवाले वनमाली श्रीकृष्णकरके जो गोपी रमीगई वह कामबाणसे नहीं खंडित होती है किन्तु संभोगमें खंडित नहीं होती अर्थात् वियोगमें तो अवश्यही होती है ॥ २ ॥

अमृतमधुरमृदुतरवचनेन ॥
ज्वलति न सा मलयजपवनेन ॥ ३ ॥

सं० टी०–अमृतेति । अमृतवत् मधुराणि मनोज्ञानि मृदुतराणि अतिकोमलानि वाक्यानि यस्य तेन वनमालिना या रमिता सा मलयजपवनेन मलयानिलेन न ज्वलति न संदीप्यते संभोगे । वियोगे तु सा न ज्वलति अपि तु ज्वलत्येव ॥ ३ ॥

भा० टी०–अमृतके समान मधुर अत्यंत कोमल बचनोंको बोलनेवाले श्रीकृष्णकरके जो रमीगई है वेह मलयागिरिकी वायुसे संभोगमें नहीं जलती है अर्थात् वियोगमें जलती ही है ॥ ३ ॥

**स्थलजलरुहरुचिकरचरणेन ॥**
**लुठति न सा हिमकरकिरणेन ॥ ४ ॥**

सं० टी०—स्थलेति । स्थलोद्भवजलरुहाणां रुचिरिव पद्मानां रुचिर्येषां तादृशौ करौ चरणौ च यस्य तेन वनमालिना या रमिता सा हिमकरस्य किरणेन चंद्रस्य दीप्त्या न लुठति नोत्तप्ता भवति । इतिसंभोगे । वियोगे तु न तपति अपि तु तपत्येव । स्थले पद्मस्यातिलोहितत्वेनोपादानम् ॥ ४ ॥

भा० टी०—स्थलमें होनेवाले कमलोंसरीखी कांतिवाले हाथ पैरोंवाले श्रीकृष्णकरके जो रमीगई है वहे चंद्रमाकी किरणोंकरके संतप्त भोगमें नहीं होती है अर्थात् वियोगमें तो संतप्तही होती है ॥ ४ ॥

**सजलजलदसमुदयरुचिरेण ॥**
**दलति न सा हृदि चिरविरहेण ॥ ५ ॥**

सं० टी०—सजलेति । सजलजलदसमुदयवत् सोदकमेघोदकवत् रुचिरः सुंदरस्तेन वनमालिना या रमिता सा हृदि मनसि विरहभरेण विरहाधिक्येन न दलति न विदीर्यते इति पूर्ववत् ज्ञेयम् ॥ ५ ॥

भा० टी०—और सजल मेघोदयसरीखी कांतिवाले वनमालीकरके जो रमी गई है वहे हृदयमें बहुत कालसे उत्पन्न हुए अधिक विरहसे भोगमें नहीं खंडित होती है अर्थात् वियोगमें तो खंडित होतीही है ॥ ५ ॥

**कनकनिकषरुचिशुचिवसनेन ॥**
**श्वसिति न सा परिजनहसनेन ॥ ६ ॥**

सं० टी०—कनकेति । कनकनिकषस्य सुवर्णरेखाया रुचिरिव शुचि विमलं वस्त्रं यस्य पीतांबरेणेत्यर्थः । तेन वनमालिना या रमिता सा परिजनहसनेन लोकहास्येन सखीहास्येन न श्वसिति संभोगे । वियोगे तु परिजनहसनेन सपत्नीहसनेन न श्वसिति अपि तु श्वसित्येव ॥ ६ ॥

भा० टी०—जो सुवर्णकी रेखाके समान कांतिसरीखे पीतांबर वस्त्रधारी कृष्ण करके रमीगई जो गोपी है वहे सपत्नी जनोंके हंसनेसे भोगमें उच्च श्वास नहीं लेती है अर्थात् वियोगमें तो आघाके श्वास लेतीही है ॥ ६ ॥

**सकलभुवनजनवरतरुणेन ॥**
**वहति न सा रुजमतिकरुणेन ॥ ७ ॥**

सं० टी०—सकलेति । सकलभुवने त्रैलोक्ये ये जनाः युवानस्तेभ्योऽपि वरेण श्रेष्ठेन तरुणेन यूना अतिकरुणेनातिदयावता वनमालिना या रमिता सा रुजं पीडां न वहतीतिसंभोगे । वियोगे तु सा पीडा वहत्येव । कीदृशेन कृष्णेन करुणां दयां अतिक्रांतेन निर्दयेनेत्यर्थः ॥ ७ ॥

भा० टी०—जो संपूर्ण त्रिलोकीके जवान जनोंसे उत्तम और अत्यंत दयावाले श्रीकृष्ण करके रमीगई वह भोगमें, पीड़ाको नहीं प्राप्त होती है, अर्थात् वियोगमें तो अवश्यही पीड़ाको प्राप्त होती है ॥ ७ ॥

**श्रीजयदेवभणितवचनेन ॥ प्रविशतु हरिरपि हृदयमनेन ॥ ८ ॥ इति श्रीगीतगोविंदे षोडशः प्रबंधः ॥ १६ ॥**

सं० टी०—अनेनेति । श्रीजयदेवभणितं यद्वचनं गीतरूपं तेन हरिः कृष्णोपि हृदयं भक्तानां चित्तं प्रविशतु पुण्यदातृत्वात् । कीदृशं हृदयं हरिच्चरणचिंतनात् विनष्टपापमिति भावः ॥ ८ ॥

भा० टी०—इस श्रीजयदेवसे कहे हुए वचन करके श्रीकृष्णचंद्रभी भक्तजनोंके हृदयमें वास करो ॥८॥ इतिश्रीगीतगोविंदस्य रसिकप्रियानाम भाषाटीकायां षोडशः प्रबंधः ॥१६॥

पीडयंतं मलयानिलं प्रार्थयते—

**श्लोकः ॥ मनोभवानंदन चंदनानिल प्रसीद रे दक्षिण मुंच वामताम् ॥ क्षणं जगत्प्राण विधाय माधवं पुरो मम प्राणहरो भविष्यसि ॥ १ ॥**

सं० टी०—मनोभवेति । हे चन्दनानिल मलयसंबंधिवात प्रसीद ममोपरि प्रसन्नो भव । रे इत्याक्षेपसंबोधनं दुःखकारित्वात् । दक्षिण त्वं वामतां प्रतिकूलतां मुंच त्यज । चन्दनसंसर्गित्वात्तव वक्रत्वं नोचितमितिभावः । ननु मयि वामत्वं नास्तीत्यत आह । हे मनोभवानन्दन काममानन्दयसीति तदुद्बोधेनैव मत्प्रातिकूल्यमाचरसीत्यर्थः । यदि च वामतामपि न मुंचसि तदा हे

जगत्प्राण जगतां प्राणभूत क्षणं अल्पकालं माधवं पुरो विधाय कृष्णमग्रे कृत्वा मम प्राणहरो भविष्यसि । प्राणगमनसमये हि कृष्णदर्शनं अतिदुर्लभं इति जगतां प्राणस्य प्राणसंरक्षणं समुचितमिति भावः । दक्षिणस्य वामत्वं जगत्प्राणस्य प्राणहरत्वमिति विरोधनामालंकारश्च ॥ १ ॥

भा० टी०-हे कामदेवको आनंद करनेवाली मलयाचलकी वायु ! मेरे ऊपर प्रसन्न हो. रे दक्षिण सरल वायु ! तुम वामता अर्थात् उलटेपनको त्यागदो. हे जगत्के प्राण वायु ! तुम क्षण कालतक श्रीकृष्णको मेरे आगे करके ( फिर ) मेरे प्राणोंको हरनेवाले होउगे ॥ १ ॥

पुनरपि सखीं प्रत्याह—

श्लोकः ॥ रिपुरिव सखीसंवासोयं शिखीव हिमानिलो
विषमिव सुधारश्मिर्दूरं दुनोति मनोगमम् ॥
हृदयमदये तस्मिन्नेवं पुनर्वलते बलात्
कुवलयदृशां वामः कामो निकामनिरंकुशः ॥ २ ॥

सं० टी०—रिपुरिति । सः अयं सखीसंवासः सखीभिः सह सम्यक् वासो वासस्थानं रिपुरिव शत्रुरिव मम मनोऽतिसंतापयति । हिमानिलः शीतलवायुः शिखीव वह्निरिव मम मनो दुनोति । सुधारश्मिश्चंद्रो विषं कालकूटमिव दूरं दुनोत्यतिसंतापयति तस्मिन् अदये करुणारहिते प्रिय एवं विचारितमेव, मम हृदयं पुनः पुनरपि बलात् हठाद्वलते निवार्यमाणमपि तत्रैव निर्गच्छतीत्यर्थः । यतः कुवलयदृशां नीलोत्पलाक्षीणां कामः कंदर्पो निकामनिरंकुशः अतिशयेन स्वेच्छाचारी अपरतंत्र इत्यर्थः । अतएव वामः क्रूरः । तदुक्तं रसिकरहस्ये " निषिद्धे वर्तते प्रायः कामो वामः स्वभावतः " इति सखीना रिपुवद्धिमानिलस्य वह्निवत् सुधांशोर्विषवदिति विरोधालंकारश्चात्र ॥ २ ॥

भा० टी०—सो यह सखीजनोंका समूह शत्रुकी तरह और हिमाचलका वायु अग्निकी तरह और चंद्रमा विषकी तरह मेरे मनोरथको अत्यंत संताता है दुःख देता है ऐसे विचार

है फिरभी तिसै [१७]निर्दयी श्रीकृष्णविषे मेरा चित्त हठसे चलता है नीलकमलसरीखे नेत्रोंवाली कामिनियोंका कामदेव विपरीत है अत्यंत स्वेच्छाचारी है ॥ २ ॥

पुनरपि जीवितनिरपेक्षत्वेन मलयानिलादीन्प्रत्याह—

श्लोकः ॥ बाधां विधेहि मलयानिल पंचबाण प्राणान्
गृहाण न गृहं पुनराश्रयिष्ये ॥ किं ते कृतांतभगिनि
क्षमया तरंगैरंगानि सिंच मम शाम्यतु देहदाहः ॥ ३ ॥

सं० टी०—बाधामिति । हे मलयानिल चन्दनवायो बाधां मम पीडां विधेहि कुरु । हे पंचबाण हे काम त्वं मम प्राणान् गृहाण । यथा पुनरपि अहं गृहं नाश्रये न यास्यामि तथा प्राणान् गृहाणेत्यर्थः । हे कृतांतभगिनि यमस्वसः यमुने तव क्षमया शांत्या किं यमभगिन्यास्तव शांतिर्नोचितेति भावः । त्वत्तरंगैः स्वकीयैः कल्लोलैः मे अंगं निषिंच प्लावय तेन मम देहदाहः शरीरतापः शाम्यतु मरणमेव भवत्वित्यर्थः ॥ ३ ॥

भा० टी०—हे मलयाचलकी सुगंधियुक्त वायु ! तुम बाधा करो, हे कामदेव ! तुम प्राणोंको निकालो, क्योंकि जिस्से फिर मैं घरमें नहीं जाऊंगी. हे यमुने ! तुम्हारे क्षमा करनेसे क्या है किंतु तरंगोंकरके [१६]अंगोंको [१७]सींचो तिस्से मेरा देहसंताप शांत होगा अर्थात् मेरा डूबके मरनाही हो ॥ ३ ॥

सर्गांते कविर्नमस्करोति—

श्लोकः ॥ सांद्रानंदपुरंदरादिदिविषद्वृंदैरमंदादरा
दानम्रैर्मुकुटेंद्रनीलमणिभिः संदर्शितेंदीवरम् ॥
स्वच्छंदं मकरंदसुंदरगलन्मंदाकिनीमेदुरं श्री-
गोविंदपदारविंदमशुभस्कंदाय वंदामहे ॥ ४ ॥

इति श्रीकविराजश्रीजयदेवकृतगीतगोविंदे महाकाव्ये
श्रीनागरनारायणो नाम सटीकः सप्तमः सर्गः ॥ ७ ॥

सं० टी०—सांद्रेति । श्रीगोविंदस्य पदारविंदं श्रीकृष्णस्य चरणपद्मं वंदामहे नमामः । किमर्थं अशुभस्कन्दाय अशुभनाशार्थं कथंभूतं पदारविंदं सां-

द्रानंदाः निबिडहर्षाः पुरंदरादिदिविषदः इन्द्रादिदेवास्तेषां वृन्दैः समूहैरमंदादरात् अतिशयितबहुमानादानम्रैः समंतान्नातियुक्तैः कर्तृभूतैः मुकुटानामिंद्रनीलमणिभिः नीलवर्णैर्मणिभिः करणभूतैः संदर्शित इंदीवरभ्रमो यत्र । पुनः कीदृशं स्वच्छंदं यथा स्यात्तथा मकरंदवत्सुंदरं पुष्परसवन्मधुरं यथा गलंत्या मंदाकिन्या वियद्गंगया मेदुरं सांद्रं स्निग्धमित्यर्थः । श्रीशब्द उत्कर्षार्थः नागरश्चतुरो नारायणो यत्र सः तथा । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

भा० टी०—अति आनंदयुक्त इंद्र आदि देवगणोंसे नियुक्त किये हुए अत्यंत आदरसे प्रणत हुए मुकुटोंके नील मणियोंकरके नील कमलपुष्पकी भ्रांति दर्शानेवाले इच्छापूर्वक मधुर पुष्परसको गिराते हुएकी तरह मंदाकिनी आकाशकी गंगासे स्निग्ध ( गीले ) हुये ऐसे श्रीकृष्णचंद्रके पदारविंदको अशुभ ( पापके ) नाशकेवास्ते प्रणाम करते हैं ॥ ४ ॥

इति श्रीगीतगोविंदस्य रसिकप्रियानाम भाषाटीकायां सप्तमः सर्गः ॥ ७ ॥

---

## अथ अष्टमः सर्गः प्रारभ्यते ॥

अब आठवां सर्ग प्रारम्भ किया जाता है.

---

अधुना राधा प्रियं प्रातरागतं दृष्ट्वा साभ्यसूयवचनमेवमाह—

श्लोकः ॥ अथ कथमपि यामिनीं विनीय स्मरशरजर्जरितापि सा प्रभाते ॥ अनुनयवचनं वदंतमग्रे प्रणतमपि प्रियमाह साभ्यसूयम् ॥ १ ॥

सं० टी०—अथेति । अथानंतरं मंगलार्थे वा । कथमपि सकष्टं यामिनीं रात्रिं विनीय नीत्वा स्थिता सा राधा प्रियं कृष्णं साभ्यसूयं सेर्ष्यं यथा स्यात्तथाह उक्तवती । कीदृशी सा स्मरशरैः कामबाणैः जर्जरितापि विद्धापि । कीदृशं प्रियं प्रातः समये अनुनयाय प्रबोधाय वचनं वाक्यं वदंतं । पुन कीदृशं अग्रे प्रणतमपि नम्रमपि ॥ १ ॥

भा० टी०—इससे अनंतर कामदेवके बाणसे विंधी हुईभी वह राधा किसीक दुःख प्रकारसेभी रात्रीको व्यतीत करके प्रभात समयमें प्रबोधकेवास्ते वचन कहते हुए आगे खड़े होके नम्रहुएभी प्रिय श्रीकृष्णको ईर्षापूर्वक बचन कहती भई ॥ १ ॥

अथ सप्तदशप्रबंधो भैरवरागेण यतिताले गीयते.

अब सत्रहवां प्रबंध भैरव रागकरके यतितालमें गाया जाता है।

साभ्यसूयवचनमेव गीतेनाह—

रजनिजनितगुरुजागररागकषायितमलसनिमेषम् ॥ वहति नयनमनुरागमिव स्फुटमुदितरसाभिनिवेशम् ॥ १ ॥ हरि-हरि याहि माधव याहि केशव मा वद कैतववादम् ॥ तामनुसर सरसीरुहलोचन या हरति विषादम् ॥ ध्रु० ॥

सं० टी०—रजनीति । अस्मिन् खंडिता नाम नायिका वर्ण्यते तल्लक्षणं "उल्लंघ्य समयं यस्याः प्रेयानन्योपभोगवान् । भोगलक्ष्मांकितः प्रातरागच्छेत्सा हि खंडिता । निद्राकषायकलुषीकृतताम्रनेत्रो नारीनखव्रणविशेषविचित्रितांगः । यस्याः कुतोऽपि गृहमेति पतिः प्रभाते सा खंडितेति कथिता कविभिः पुराणैः" ॥ २ ॥ भैरवरागः । तल्लक्षणं "सरोवरस्थे स्फटिकस्य मंडपे सरोरुहैः शंकरमर्चयंती । तालप्रभेदप्रतिपन्नगीता गौरीतनुर्नारद भैरवीयं" इति । हरिहरि खेदानुकारे अव्ययं । हे केशव याहि हे माधव याहि । कोपाधिक्येन द्विरुक्तिः । कैतववादं च कपटवाक्यं मा वद । हे सरसीरुहलोचन कमलनयन तां नायिकां अनुसर गच्छ या तव विषादं हरति दूरीकरोति । कथं विषादवत्त्वमित्याह हे कृष्ण तव नयनं नेत्रं स्फुटं व्यक्तं तस्यानुरागमिव वहति धारयति । कीदृशं नयनं रजनिजनितेन रात्रिकृतेन गुरुणातिशयेन जागररागेण जागरोत्पन्नलोहितरागेण कषायितं आरक्तं कृतं । पुनः कीदृशं रात्रिजागरेणालसो मंथरो निमेषः पक्ष्मचलनं यस्य । कीदृशं अनुरागं उदितः कथितः रसस्य अन्यकामिनीविषयशृंगाररसस्याभिनिवेशस्तत्परता येन । मा लक्ष्मीः तस्याः धव । इत्यनेन तत्पतित्वेन चांचल्यं द्योतितं । केशवेत्यनेन क्लेशनाशकत्वेनापि क्लेशशब्दानुवृत्तित्वमनुचितमिति द्योतितम् ॥ १ ॥

भा० टी०—हरि हरि बड़ा खेद है, हे माधव ! हे केशव ! चलाजा चलाजा, कपटके वचन मत कहो. हे कमलनेत्र ! तिसे गोपीके पास जावो, जो तुम्हारे विषादको हरती है, हे कृष्ण ! तुम्हारे नेत्र रात्रीके बहुतसे जागरणसे प्राप्त हुई लालीसे लाल गदमले

होरहे हैं और आलस्यसे पलक झिपकती है ऐसे नेत्र परस्त्रीसंगके रसको कहतेहुए अनुरागको अर्थात् अन्यगोपीकी प्रीतिको मानो प्रत्यक्षही धारण कर रहे हैं ॥ १ ॥

ननु त्वदन्वेषणार्थं जागरान्मे नेत्रयोर्लौहित्यमलं दुःखशंकयेत्यतआह–

कज्जलमलिनविलोचनचुंबनविरचितनीलिमरूपम् ॥
दशनवसनमरुणं तव कृष्ण तनोति तनोरनुरूपम् ॥ २ ॥

सं० टी०—कज्जलेति । हे कृष्ण । तवारुणं तांबूलरागेण लोहितं दशनवसनमधरः तनोः शरीरस्यानुरूपं सादृश्यं तनोति विस्तारयति । कीदृशं दशनवसनं कज्जलेनांजनेन मलिने श्यामे ये विलोचने नेत्रे तयोश्चुंबनेन विरचितं कृतं नीलिमरूपं श्यामतारूपं यस्य । आरक्ताधरस्य नेत्रचुंबनेन श्यामताप्रतिपादनात् तनोरनुरूपत्वं । अन्यस्यां कामिन्यां कृष्णस्यानुरागः सूचितः ॥ २ ॥

भा० टी०–हे कृष्ण ! तुम्हारे लाल ओष्ठभी ( परस्त्रीके ) कज्जलसे श्याम हुए नेत्रोंका चुंबन करनेसे श्याम वर्ण हैं सो, आपके शरीरके अनुरूप, (सदृश) ही दीखते हैं ॥२॥

किंच–

वपुरनुवहति तव स्मरसंगरखरनखरक्षतरेखम् ॥ मरकतशकलकलितकलधौतलिपेरिव रतिजयलेखम् ॥ ३ ॥

सं० टी०—वपुरिति । हे कृष्ण । तव वपुः शरीरं रतिजयलेखं सुरतविजयप्रशस्तिलेखनपत्रं अनुवहति अनुकरोति । कीदृशं वपुः स्मरसंगरे कामयुद्धे खराणां तीक्ष्णानां नखानां क्षतान्येव रेखा यत्र । कस्या इव मरकतशकले नीलमणिखंडे कलितायाः निर्मितायाः कलधौतलिपेः सुवर्णविरचिताक्षरस्य विन्यासस्येव । वपुषो नीलत्वान्नखक्षतस्फुटकत्वान्मरकतखंडार्पितसुवर्णाक्षरसाम्यम् ॥ ३ ॥

भा० टी०–और काँमयुद्धमें पैनें नखोंके छेदकी रेखावाला तुम्हारा शरीर नीलमणिके खंडपर मानों सुवर्णके अक्षर लिख रक्खे हैं तैसे सुरतके विजय पत्रकोही मानों दिखाताहै॥३॥

ननु मार्गे विस्मृत्य गच्छतो मे वपुषि वने कंटकादिस्पर्शादेवं दृश्यते ननु नखांकमित्यत आह–

चरणकमलगलदलक्तकसिक्तमिदं तव हृदयमुदारम् ॥
दर्शयतीव बहिर्मदनद्रुमनवकिसलयपरिवारम् ॥ ४ ॥

सं० टी०—चरणेति । इदं उदारं मनोहरं तव हृदयं मदनद्रुमस्य कामवृक्षस्य हृदयांतर्गतस्य नवकिसलयपरिवारं । नूतनपल्लवसमूहं बहिर्दर्शयतीव प्रकटयतीव । कीदृशं हृदयं चरणकमलादन्यस्त्रीपादपद्मात् गलता स्रवता अलक्तकेन सिक्तं उक्षितं । किसलयपदेनैव नूतनत्वविधानात्पुनर्नवपदं अद्यतनत्वसूचनार्थं । रूपकालंकारश्चात्र ॥ ४ ॥

भा० टी०—परस्त्रीके चरणकमलसे गिरीहुई मेंहदीसे अथवा महा उरसे रंगाहुआ यह तुम्हारा उदार हृदय, कामवृक्षके नवीन पत्रसमूहको बाहिर मानों दिखाता हुआहै ॥ ४ ॥

ननु तव खेदेन त्वया ऐक्यान्मद्धृदये व्याधिर्विक्रिया जाता कथमन्यथा कल्प्यते सत्यं यदि तव मया ऐक्यं न स्यात्तदा तव शरीरगतक्षतेन मम वेदना न स्यादित्याह—

**दशनपदं भवदधरगतं मम जनयति चेतसि खेदम् ॥ कथयति कथमधुनापि मया सह तव वपुरेतदभेदम् ॥ ५ ॥**

सं० टी०—दशनेति । भवदधरगतं तवाधरोष्ठे वर्तमानं दशनपदं अन्यकामिनीदंतक्षतं मम चेतसि खेदं संतापं जनयति करोतीत्यर्थः । एतादृशं नवपदं तव वपुरधुनापीदानीमपि मया सह अभेदं कथं कथयतीत्यर्थः । न विद्यते भेदो यस्य पूर्वं मया सह तव वपुषो भेदो नास्तीति स्थितम् । इदानीं तु तद्विपरीतमिति मया सह एवेति विभावनालंकारश्चात्र ॥ ५ ॥

भा० टी०—हे कृष्ण! तुम्हारे ओष्ठमें लगाहुआ परस्त्रीका दंतक्षत मेरे चित्तमें खेद करताहै इस प्रकारसे यह तुम्हारा शरीर अब भी मेरे साथ अभेद कैसे कहताहै अर्थात् मेरे संगते भेदही कहताहै ॥ ५ ॥

ननु तवोपायनार्थं कमलत्रोटनं कृतवति मयि पद्मकोशादापतता भृंगेण ममाधरो दष्टो नतु दंतक्षतमित्यत आह—

**बहिरिव मलिनतरं तव कृष्ण मनोऽपि भविष्यति नूनम् ॥ कथमथ वंचयसे जनमनुगतमसमशरज्वरदूनम् ॥ ६ ॥**

सं० टी०—बहिरिवेति । नूनमेवेति वितर्के हे कृष्ण तव चित्तमपि बहिरिव मलिनतरं श्यामं भविष्यतीति नूनं तर्कयामि । ननु मालिन्यं त्वया कथं ज्ञातमित्यत आह अथान्यथा त्वं असमशरः कामस्तस्य ज्वरेण पीडया दूनमुपतप्तं अनुगतं त्वामनुसृतं मल्लक्षणं जनं कथं वंचयसे प्रतारयसि । अतः कृष्णत्वं कौटिल्यमेव । नूनमिति शब्दोपादानादुत्प्रेक्षालंकारः ॥ ६ ॥

भा० टी०– हे कृष्ण ! तुम्हारा मन भी बाहिरकी तरह अत्यंत मलिन होगा यह निश्चय जानतीहूं, इससे अनंतर कामज्वरसे पीड़ितहुई मेरी सरीखी स्त्रीमात्रको तुमको प्राप्तहुईको कैसे ठगतेहो ? ॥ ६ ॥

भ्रमति भवानबलाकवलाय वनेषु किमत्र विचित्रम् ॥
प्रथयति पूतनिकैव वधूवधनिर्दयबालचरित्रम् ॥ ७ ॥

सं० टी०—भ्रमतीति । अबलाकवलाय स्त्रीणां ग्रसनार्थं भवान् वनेषु अरण्येषु भ्रमति । अत्र स्त्रीपापे किं विचित्रं न किमपीत्यर्थः । यतः पूतनिकैव राक्षस्येव वधूवधे स्त्रीवधार्थं निर्दयं दयारहितं तव बालचरित्रं बालचेष्टितं प्रथयति ख्यापयति । यद्वा हे वधूवधनिर्दयः शिशुना त्वया या राक्षसी हता तस्मिंस्त्वयि यूनि संप्रति कोमलांगीनामस्माकं मारणे किं चित्रमिति भावः ॥ ७ ॥

भा० टी०—तुम स्त्रियोंको ग्रसनेके वास्ते वनोंमें भ्रमते फिरतेहो इसमें अर्थात् स्त्रीवधमें क्या तुमको आश्चर्यहै और जैसे पूतना राक्षसी मारी तैसेही ( वधूवध ) स्त्रियोंके मारनेमें दयारहित बालचरित्रकोही विख्यात करते हो क्या ? अर्थात् बालपनमें ही तुमने महा कठोर राक्षसी पूतनाका बध किया तो अभी जवानपनमें मेरे सरीखी कोमल अंगवाली स्त्रियोंको मारनेमें आपको कुछ आश्चर्य नहीं है ॥ ७ ॥

श्रीजयदेवभणितरतिवंचितखंडितयुवतिविलापम् ॥
शृणुत सुधामधुरं विबुधा विबुधालयतोऽपि दुरापम् ॥ ८ ॥
॥ इतिश्रीगीतगोविंदे सप्तदशः प्रबंधः ॥ १७ ॥

सं० टी०—श्रीजयदेवेति । हे विबुधाः पंडिताः श्रीयुतजयदेवेन भणितउक्तश्चासौ रतिवंचितखंडितयुवतीविलापस्तं शृणुत आकर्णयत । कीदृशं विलापं

सुधातोपि मधुरं मनोहरं । तत्र हेतुमाह विबुधालयतो स्वर्गादपि दुरापं दुर्लभं । तदुक्तं "तव कथामृत" मिति श्रीभागवते ॥ ८ ॥

भा० टी०–हे पंडितजनों! अमृतसे भी मधुर श्रीजयदेवकविसे कहेहुए रमणसे ठगी-हुई खंडिता युवती (राधाके) विलापको सुनों क्योंकि यह स्वर्गसे भी दुर्लभहै ॥ ८ ॥

इतिश्रीगीतगोविंदस्य रसिकप्रियानामभाषाटीकायां सप्तदशः प्रबंधः ॥ १७ ॥

श्लोकः ॥ तवेदं पश्यंत्याः प्रसरदनुरागं बहिरिव प्रियापादालक्तच्छुरितमरुणद्योति हृदयम् ॥ ममाद्य प्रख्यातप्रणयभरभंगेन कितव त्वदालोकः शोकादपि किमपि लज्जां जनयति ॥ १ ॥

सं० टी०—तवेदमिति । हे कितव वंचक त्वदालोकस्तव दर्शनं प्रख्यातस्य लोकप्रसिद्धस्य प्रणयभरस्य प्रेमातिशयस्य भंगेन नाशेन यः शोकस्तस्मादपि मम अद्य किं अनिर्वचनीयां लज्जां जनयति । कीदृश्या मम तवेदं हृदयं पश्यंत्याः । कीदृशं हृदयं प्रियायाः पादालक्तकेन चरणसंबंधियावकेन छुरितं व्याप्तं अतएव अरुणा रक्ता छाया दीप्तिर्यस्य तादृशं । अरुणद्योतीतिपाठे अरुण संध्यारागस्तद्वद्द्योतितुं शीलमस्येति तादृशं हृदयं समीक्ष्य कृते बहिः प्रसरदनुरागमिव बाह्यप्रसरन् अनुरागो यस्य । रागोहि अरुणो वर्ण्यते ॥ १ ॥

भा० टी०–हे कितव! छली! प्यारीके चरणसम्बंधी (यावक) महाउरसे समान लिप्त, इसीसे सायंकालके अरुण रंगके समान प्रकाशवाला, मानों वह महा उर नहींहै किंतु अनुरागकी आधिक्यताकी समान बाहर फैलेहुए समान तिस प्यारीका अरुणवर्णका पूर्ण प्रेमही है ऐसा तुम्हारा यह वक्षस्थल (छाती) को देखतीहुई मेरेको इसबखत तुम्हारा दर्शन लोकमें प्रसिद्ध जो पूर्ण प्रेम तिसके नाश होनेसे जो शोक तिस्से भी क्या अकथनीय लाजको ही उत्पन्न करतेहो ॥ १ ॥

इदानीं सर्गांते कविर्भक्तानाशिषयति–

श्लोकः ॥ प्रातर्नीलनिचोलमच्युतमुरः संवीतपीतांशुकं राधायाश्चकितं विलोक्य हसति स्वैरं सखीमंडले ॥

व्रीडाचंचलमंचलं नयनयोराधाय राधानने स्वादु
स्मेरमुखोयमस्तु जगदानंदाय नंदात्मजः ॥ २ ॥

सं० टी०—प्रातरिति । नन्दात्मजोयं कृष्णः जगदानन्दायास्तु लोकसुखार्थं भवतु । कीदृशः व्रीडया चंचलं लज्जया चलायमानं नयनयोर्नेत्रयोरंचलं कटाक्षं राधानने राधामुखे आधाय अर्पयित्वा स्मेरमीषद्धास्ययुक्तं मुखं यस्य सः स्मेरमुखकारणमाह कस्मिन् सति प्रातः उषसि अच्युतं कृष्णं नीलं निचोलं वस्त्रं यस्य श्यामवस्त्रधरं विलोक्य दृष्ट्वा अनु च राधाया उरः वक्षस्थलं संवीतपीतांशुकं परिधानीकृतपीतांबरं चकितं सविस्मयं यथा स्यात्तथा विलोक्य सखीसमूहे स्वैरं शनैर्हसति सति वस्त्रपरिवर्तनमालोक्य जहास इत्यर्थः । विलक्ष इति विस्मयान्वितः विषयी इति भावप्रसिद्धः शब्दः । शार्दूलविक्रीडितं वृत्तम् ॥ २

भा० टी०—लज्जासे चलायमान नेत्रोंके कटाक्षोंको राधाके मुखपर चलाके मनोहर मंद मुसकानवाले यह श्रीकृष्ण जगत्के आनंदके वास्ते हो. मुसकानका कारण कहतेहैं, कि प्रातःकालमें श्यामवस्त्रधारी मनमोहनको तथा फिरपीछे, पीले वस्त्र धारणकीहुई श्रीराधाजीकी छातीको बडे विस्मयकेसाथ देखके सखी सहेलियानको मंद मंद हँसते बखत कपडे पलटनेसे आप ऊंचे हंसते भयेहैं ॥ २ ॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविंदे महाकाव्ये खंडितावर्णने विलक्षलक्ष्मीपतिर्नामसटीकोऽष्टमः सर्गः ॥ ८ ॥

इतिश्रीगीतगोविंदस्य रसिकप्रियानामभाषाटीकायामष्टमः सर्गः ॥ ८ ॥

---

## अथ नवमः सर्गः प्रारभ्यते ।

अब नवम सर्ग प्रारंभ होता है.

---

प्रणयकोपात् हरिमधिक्षिप्येदानीं कृतपश्चात्तापां सखी आह—

गीतिः ॥ अथ तां मन्मथखिन्नां रतिरसभिन्नां विषादसंपन्नाम् ॥
अनुचिंतितहरिचरितां कलहान्तरितामुवाच रहः सखी ॥ १ ॥

सं० टी०—अथेति । अथानंतरं मंगलार्थं वा । सखी तां राधा उवाचोक्तवती कीदृशीं तां मन्मथेन कामेन खिन्नां दीनां । पुनः कीदृशीं रतिरसेन भिन्नां रहितां अत एव विषादेन दुःखेन संपन्नां युक्तां अत एवानुवारंवारं चिंतितं हरेश्चरितं पुराविलासो यया तां कलहेन प्रीतिकलहेनांतरितां व्यवहितां । अत्र कलहांतरिता नायिका वर्ण्यते तल्लक्षणं भरतेनोक्तं । " प्राणेश्वरं प्रणयकोपभरेण लभ्यं तं चाटुकारमचिरादवधार्य पश्चात् । संतप्यते मदनवह्निशिखासहस्रैर्बाष्पाकुलानुकलहांतरितेति सा स्यात् " इति ॥ १ ॥

भा० टी०—इससे अनंतर कामदेवसे दुःखित हुई, रमणके रससेरहित भई, विषादसे युक्त हुई, वारंवार श्रीकृष्णके पूर्व चरित्रोंको चिंतवन करती हुई, कलहांतरिता अर्थात् कलहसे श्रीकृष्णकरके दूर हुई ऐसी, तिस ( राधा ) को एकांतमें कोई सखी कहती भई ॥ १ ॥

अथ अष्टादशप्रबंधो गुर्जरीरागेण यतिताले गीयते.

अब अठारहवां प्रबंध गुर्जरी रागकरके यतितालमें गाया जाताहै—

**हरिरभिसरति वहति मधुपवने ॥ किमपरमधिकसुखं**
**सखि भवने ॥ माधवे मा कुरु मानिनि मानमये ॥ ध्रु० ॥**

सं० टी०—हरिरिति । गुर्जरीरागः यतितालस्तु । अये हे मानिनि अभिमानवति राधे माधवे कृष्णे मानं अभिमानं मा कुरु माकार्षीरिति । प्रार्थनायां लोट् । यतः मधुपवने वसंतवायौ वहति सति हरिः अभिसरति स्वयमेव त्वदीया संकेतभूमिमागच्छतीति । हे सखि राधे भवनेपि गृहेपि अपरं अधिकसुखं किं अपि तु न किंचिदस्ति । नायकस्य स्वयमागमनात् कोपो न युक्त इत्यर्थः ॥ १ ॥

भा० टी०—हे अभिमानवाली ! राधे ! श्रीकृष्णविषे अभिमान मत कर वसंत ऋतुकी पवन चलते समय श्रीकृष्ण आपही तुम्हारे स्थानपर आगयेहैं हे सखि ? घरमें अन्य अधिक सुख क्या है ! ॥ १ ॥

अपि च—

**तालफलादपि गुरुमतिसरसम् ॥**
**किं विफलीकुरुषे कुचकलशम् ॥ २ ॥**

सं॰ टी॰—तालेति । हे राधे तालफलादपि काठिन्येन स्थौल्येन वर्तुलत्वेन च गुरुं अधिकं कुचकलशं स्तनघटं किं किमर्थं विफलीकुरुषे कृष्णहस्तव्यापारपरिशीलनाभावाद्वैफल्यमिति भावः । कीदृशं अतिसरसं अतिशयरसयुक्तं तस्मिन् दृष्टे यूनां रसाविर्भावाद्धृदयाल्हादकरमिति यावत् ॥ २ ॥

भा॰ टी॰—हे राधे ! ताडके फलसे भी कठिन और गोल, अत्यंत रसिक कुचकलशोंको क्यों विफल करतीहो ! अर्थात् कृष्णके संग रमण होनेदो ॥ २ ॥

ननु यदा हरिरागतस्तदा त्वया न कथितमित्यत आह—

**कति न कथितमिदमनुपदमचिरम् ॥**
**मा परिहर हरिमतिशयरुचिरम् ॥ ३ ॥**

सं॰ टी॰—कतीति । हे राधे इदं अनुपदं स्थाने अचिरं सांप्रतं कति कतिवारान्मया न कथितं किंतु बहु कथितमेव । किं तदित्यत आह । त्वं अतिशयरुचिरं अतिकमनीयं हरिं कृष्णं मा परिहर मावज्ञासीरिति मा त्यज ॥ ३ ॥

भा॰ टी॰—हे राधे ! यही योग्य बचन ( मैनें ) अभी कितेकबार नहीं कहाहै? कि अत्यंत मनोहर श्रीकृष्णको मत त्याग ( तिरस्कार न कर ) ॥ ३ ॥

एवं सुमुखीं प्रत्याह—

**किमिति विषीदसि रोदिषि विकला ॥**
**विहसति युवतिसभा तव सकला ॥ ४ ॥**

सं॰ टी॰—किमितीति । विकला असावधानेंद्रिया किमिति कस्मात् विषीदसि दुःखिता भवसि रोदिषि च क्रंदसि मदुक्तानिराकरणात् इदानीं विषादो रोदनं च व्यर्थमिति सकला संपूर्णा युवतिसभा तरुणीसमाजः भवत्या विहसति उपहासं करोति । तवेति ‘ कर्मण्यपीति केचित् ’ इति षष्ठी ॥ ४ ॥

भा॰ टी॰— हे अत्यंतविकलहुइ राधे ! किसवास्ते दुःखित होतीहै ? क्यों रोतीहै ? संपूर्ण स्त्रियोंकी सभा तुमको हंसतीहै ॥ ४ ॥

तर्हि किं करोमीत्यत आह—

**मृदुनलिनीदलशीतलशयने ॥**
**हरिमवलोकय सफलय नयने ॥ ५ ॥**

सं० टी०—मृदुनलिनीदलेन कोमलपत्रेण शीतले कृते शयने शय्यायां स्थितं हरिं कृष्णमवलोकय पश्य । दर्शनान्नयने नेत्रे सफलय सफले कुरु ॥ ५ ॥

भा० टी०-कोमल कमलपत्रोंकी शीतल शय्यापर ( स्थितहुए ) श्रीकृष्णको देखो और नेत्रोंको सफल करो ॥ ५ ॥

विचारयंतीं प्रत्याह—

**जनयसि मनसि किमिति गुरुखेदम् ॥**
**शृणु मम वचनमनीहितभेदम् ॥ ६ ॥**

सं० टी०—हे राधे त्वं मनसि गुरुखेदं महद्दुःखं किमिति जनयसि उत्पादयसि तस्मान्मम वचनं वाक्यं शृणु आकर्णय । कीदृशं वचनं अनीहितः अनाकांक्षितो भेदो विरहो येन । भवत्या हितमेव वचनं वदामीत्यर्थः । अत एव शृणु ॥ ६ ॥

भा० टी०-हे राधे ! तुम मनमें बड़ा भारी खेद क्यों करती हो ? विरहरहित तुम्हारे हितका मेरा वचन सुनो ॥ ६ ॥

कीदृशं वचनमित्यत आह—

**हरिरुपयातु वदतु बहुमधुरम् ॥**
**किमिति करोषि हृदयमतिविधुरम् ॥ ७ ॥**

सं० टी०—हरिरिति । कृष्णः उपयातु त्वदंतिकं आगच्छतु । बहुमधुरं तवानुनयवचनं वदतु । त्वं हृदयं मनः अतिविधुरं अतिविह्वलं किमिति करोषि । न किंचित्प्रयोजनमित्यर्थः ॥ ७ ॥

भा० टी०-श्रीकृष्ण तुम्हारे समीप आजावें, बहुतसे मधुर वचन कहें. चित्तको अतिविह्वल क्यों करतीहो ? ॥ ७ ॥

श्रीजयदेवभणितमतिललितम् ॥
सुखयतु रसिकजनं हरिचरितम् ॥ ८ ॥

इति श्रीगीतगोविंदे अष्टादशःप्रबंधः ॥ १८ ॥

सं० टी०—श्रीजयदेवेति श्रीजयदेवभणितं उक्तं हरिचरितं कर्तृ रसिकजनं कृष्णे भाविकं जनं सुखयतु सुखिनं करोतु । कीदृशं अतिललितं अतिसुंदरं श्राव्य-मित्यर्थः । सुविनीतमिति पाठे कीदृशं जनं सुविनीतं अतिविनययुक्तम् ॥ ८ ॥

भा० टी०—श्रीजयदेव कविसे कहाहुआ, अत्यंत मनोहर, हरिचरित्र रसिक जनको सुखी करो ॥ ८ ॥

इतिश्रीगीतगोविंदस्य रसिकप्रियानाम भाषाटीकायां अष्टादशः प्रबंधः ॥ १८ ॥

इदानीं प्रणतमपि प्रियमतिरोषात् त्यजंतीं राधां निंदंती सखी प्राह—

श्लोकः॥ स्निग्धे यत्परुषासि यत्प्रणमति स्तब्धासि यद्रागिणि
द्वेषस्थासि यदुन्मुखे विमुखतां यातासि तस्मिन् प्रिये ॥
तद्युक्तं विपरीतकारिणि तव श्रीखंडचर्चाविषं शीतांशुस्तपनो
हिमं हुतवहः क्रीडामुदो यातनाः ॥ १ ॥

सं० टी०—स्निग्धइति । हे विपरीतकारिणि विपर्ययविधायिनि राधे त्वं स्निग्धे मधुरवादिनि तस्मिन् प्रिये कृष्णे यत्परुषासि निष्ठुरभाषिणी असि वर्तसे । किं च तस्मिन्प्रिये प्रणमति सति विनययुक्ते सति यत्स्तब्धासि स्थाणुवत् स्थितासि यत् रागिणि सानुरागे प्रिये द्वेषस्थासि असंतुष्टासि यत् उन्मुखे संमुखे तस्मिन् प्रिये विमुखतां परावृत्ततां यातासि । तस्मात् श्रीखण्डचर्चा चंदन-कथापि तव विषमिव शीतांशुश्चंद्रस्तपनः सूर्य इव हिमं तुषारः हुतवहः अग्नि-रिव क्रीडामुदः क्रीडासंतोषाः यातना वेदना युक्तमेव योग्यमेव तव मदीयव-चनविपरीतकारित्वात् । विरोधालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

भा० टी०—हे विपरीत करनेवाली ! राधे ! मधुर बोलनेवाले तिस प्रिये पतिविषे जो तुम कठोर बर्तती हो, प्रणत होनेपर भी जो प्रियपर स्तंब्धा ( स्तंभकी ) तरह खडी रहती हो, जो प्रीतिवालेपरभी द्वेष करती हो, जो सन्मुखहुएपरभी विमुख होती हो,

तिसीलिये चंदनकी कथाभी विषसी और चन्द्रमा सूर्यसरीखा तेज, शीतलता ( बर्फ ) अग्निसी, क्रीड़ाकी आनंदभी पीड़ासी, सो तुमको युक्त ( ठीकही ) हैं ऐसे मालूम होते हैं॥१॥

इदानीं कविर्भक्तानाशिषयति—

**श्लोकः ॥ अंतर्मोहनमौलिघूर्णनवलन्मंदारविस्रंसनस्तब्धाकर्षण-दृष्टिहर्षणमहामंत्रः कुरंगीदृशाम् ॥ दृप्यद्दानवदूयमानदिविषद्दुर्वा-रदुःखापदां भ्रंशः कंसरिपोर्व्यपोहयतु वोऽश्रेयांसि वंशीरवः॥२॥**

**इति श्रीकविराजश्रीजयदेवकृते गीतगोविंदे महाकाव्ये मुग्धमुकुंदवदनो नाम सटीको नवमः सर्गः ॥ ९ ॥**

सं० टी०—अंतरिति। कंसरिपोः कृष्णस्य वंशीरवो वेणुनादो वः युष्माकं भक्तानां अश्रेयांसि अशुभानि व्यपोहयतु खण्डयतु। कीदृशो वंशीरवः कुरंगीदृशां हरिणीनयनानां अंतर्मोहनं मनोमोहः मौलिघूर्णनं साधुसाध्विति शिरःकंपनं वलन्मंदारविस्रंसनं गुंफितपारिजातपुष्पाधःपतनं सात्विकभावात् स्तब्धाकर्षणं स्तब्धस्य अनिच्छोराकर्षणं दृष्टिहर्षणं नेत्रोत्साहः एतेषु सर्वेषु महामंत्रः । वंशीरवाकर्षे सर्वा नायिकाः कामभावापन्ना भविष्यंतीति भावः। पुनः कीदृशः दर्पवद्भिर्दानवैर्दैत्यैर्दूयमानानां दिविषदां देवतानां दुर्वारा अनिवार्या दुःखापदः दुःखसदनीभूता विपत्तयस्तासां भ्रंशः नाशकः । वंशीरवं श्रुत्वा दुःखिता अपि देवाः मुदमुद्वहंतीत्यर्थः । मुग्धो मूढः अलसः ॥ २ ॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविंदे महाकाव्ये मुग्धमुकुंदवदनोनाम सटीको नवमः सर्गः ॥ ९ ॥

भा० टी०—मृगनयनी स्त्रियोंके मनका मोहन, शिरकंपन, पारिजात वृक्षके गुंफित पुष्पोंका नीचे पड़ना, बिना इच्छावालेको बशमें करनेवाला नेत्रका उत्साह इन सबोंमें महामंत्र है. और अभिमत्त दानवोंसे दुःखित हुए देवतोंकी दुर्वार ( अत्यंत दुःखस्थान ) आपत्तियोंको नष्ट करनेवाला ऐसा कंसके शत्रु श्रीकृष्णकी वंशीका शब्द तुम्हारे दुःखोंको दूर करो ॥ २ ॥

इतिश्रीगीतगोविन्दस्य रसिकप्रियानामभाषाटीकायां नवमः सर्गः ॥ ९ ॥

## अथ दशमः सर्गः प्रारभ्यते ॥

अब दशवां सर्ग प्रारम्भ होता है.

इदानीं सोत्कंठः कृष्णो राधां दृष्ट्वा अनुनयन्नाह—

**श्लोकः ॥ अत्रांतरे मसृणरोषवशामसीमनिःश्वासनिः-
सहमुखीं सुमुखीमुपेत्य ॥ सव्रीडमीक्षितसखीवदनां
दिनांते सानंदगद्गदपदं हरिरित्युवाच ॥ १ ॥**

सं० टी०—अत्रेति । अत्रांतरे अस्मिन्नवसरे हरिः दिनांते संध्यासमये तां सुमुखीं राधां उपेत्य समीपमागत्य सानंदानि अतएव गद्गदानि कंठादल्पं नि. र्गच्छंति पदानि यस्यां क्रियायां तद्यथा भवति तथा वक्ष्यमाणं उवाच । कीदृ- शीं राधां मसृणस्य कर्कशस्य क्रोधस्य वशां आधीनां । पुनः किंभूतां असीम- स्य महतो निःश्वासस्य निःसहं सोढुं असमर्थं मुखं यस्याः सा तां कोपवद- नामित्यर्थः । पुनः किंभूतां सव्रीडं सलज्जं ईक्षितं दृष्टं सख्याः वदनं मुखं य- या सा तां पश्य कृष्णचेष्टितमित्यर्थः ॥ १ ॥

भा० टी०—इससे अनंतर श्रीकृष्णजी सायंकाल समयमें कठोर क्रोधके वश हुई, बडे भारी निःश्वास नहीं सह जावें ऐसे मुखवाली और लज्जासहित होके सखीके मुखको देख- नेवाली, सुमुखी ( राधा ) को प्राप्त होके, आनंदसे गद्गद कंठ हो जैसे तैसे यह बोलते भये ॥ १ ॥

उक्तमर्थं गीतेनाह—

अथ एकोनविंशः प्रबंधो देशवराडीरागेणाष्टतालीताले गीयते
अब उन्नीसवां प्रबन्ध देशवराडी रागकरके अठतालातालमें गायाजाताहै—

**वदसि यदि किंचिदपि दंतरुचिकौमुदी हरति दरति-
मिरमतिघोरम् ॥ स्फुरदधरसीधवे तव वदनचंद्रमा रो-
चयति लोचनचकोरम् ॥ १ ॥ प्रिये चारुशीले प्रिये
चारुशीले ॥ मुंच मयि मानमनिदानम् ॥ सपदि मदना-
नलो दहति मम मानसं देहि मुखकमलमधुपानम् ॥ ध्रु०॥**

सं० टी०—वदसीति । गीतस्यास्य देशवराडीरागः अष्टतालीतालः रागलक्षणं " आरब्धगमनमुद्रानिद्राघूर्णायमाननयनाढ्या । सुखशायिनि निजदयिते देशवराडी भवेद्गौरि " इति । " लघुद्रुतो लघुश्चेत्यष्टताली प्रकीर्तिता " इति । गीतार्थस्तु । हे चारुशीले मनोहरवृत्ते प्रिये राधे त्वं मयि अनिदानं अकारणं मानं मुंच त्यज किमिति मानत्यागस्तत्राह मदनानलः कामाग्निर्मम मानसं दहति अतः कारणात्सपदि तत्क्षणमेव मुखकमलमधुपानं पद्मं तत्संबंधि मधुपानं देहि मधुना वह्निदाहः प्रशाम्यति । ध्रुवपदं । हे राधे त्वं यदि यदा किंचिदपि वदसि तदा तव दंतानां या रुचिर्दीप्तिः सैव कौमुदी चंद्रज्योत्स्ना अतिघोरं अतिशयेन भयंकरं दरः भयं स एव तिमिरमंधकारं हरति नाशयति । अनुच तव वदनं चंद्रमा इव सः स्फुरदधरसीधवे दीप्यमानाधरामृतार्थं तादर्थ्ये चतुर्थी । मम लोचनचकोरं नेत्रपक्षिविशेषं रोचयति रुचिं इच्छां कारयति चकोरः पक्षिविशेषः चंद्रामृतलोलुपो भवत्येव ॥ १ ॥

भा० टी०—हे मनोहर स्वभाववाली ! हे प्रिये ! मनोहर स्वभाववाली ! प्रिये ! मेरेविषे विना कारणवाले अभिमानको त्यागदो. कामाग्नि मेरे मनको जलाताहै. (इसलिये) शीघ्रही (अपने) मुखकमलका मधु पीने दो. हे राधे ! जब (तुम) कछु भी कहतीहो (तब) दांतोंकी कांतिरूपी चांदनी (मेरे) भयरूपी अंधकारको हरण करती है. और तुम्हारा मुखरूपी चंद्रमा स्फुरतेहुए (ओष्ठके अमृत) अधरामृतकेवास्ते मेरे नेत्ररूपी चकोरको इच्छा करावता है ॥ १ ॥

मृषा रोषं प्रकाशयंतीमाह—

**सत्यमेवासि यदि सुदति मयि कोपिनी देहि खरनखरशरघातम् ॥**
**घटय भुजबंधनं जनय रदखंडनं येन वा भवति सुखजातम् ॥ २ ॥**

सं० टी०—सत्यामिति । हे सुदति शोभनदन्ते यदि मयि विषये सत्यमेव कोपिनी क्रोधवती असि तर्हि तव खरास्तीक्ष्णा ये नखराः नखास्ते एव शरा नाराचास्तैर्घातं प्रहारं देहि । तेनापि चेन्न तुष्यसि तर्हि भुजाभ्यां बंधनं घटय

कुरु । रदैः दंतैः खण्डनं घातं जनय विरचय । वा अथवा येन मुष्ट्यादिना सुखजातं सुखसमूहो भवति तदेव कुरु । प्रभूणां हि सापराधेषु ताडनबंधन-खंडनादयोदंडाः समुचिताः ॥ २ ॥

भा० टी०–हे सुंदर दांतोंवाली राधे ! यदि तुम, मेरेपर सत्यही क्रोधयुक्त होरही हो, तो मैंनें नखरूपी बाणोंका आघात करो. और अपनी भुजाओंसे बंधन करो. दांतोंसे खंडित मेरा मुख करो. अथवा जिससे तुम्हारे सुख हो वही करो ॥ २ ॥

ननु याऽतिप्रिया सा दंडं विदधातु किं मयाऽत आह–

**त्वमसि मम भूषणं त्वमसि मम जीवनं त्वमसि**
**मम भवजलधिरत्नम् ॥ भवतु भवतीह मयि**
**. संततमनुरोधिनी तत्र मम हृदयमतियत्नम् ॥ ३ ॥**

सं० टी०–त्वमसीति । हे राधे त्वं मम जीवनं प्राणोसि त्वां विना स्थातु-मशक्यत्वात् त्वं मम भूषणं अलंकारोसि त्वं मम भवजलधौ संसारसागरे रत्न-मसि । "जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते" इति स्त्रीरत्नमुक्तं । इह एतादृशे मयि भवती सततं निरंतरं अनुरोधिनी अनुकूला भवतु तवानुकूल्ये मम हृदयं मनः अतियत्नं अतिशययत्नयुक्तं भवति तवानुकूल्यार्थं अतिशयं यत्नं करोतीत्यर्थः ॥ ३ ॥

भा० टी०–हे राधे ! तुम मेरा जीवन हो, तुम मेरा आभूषण हो, तुम मेरा संसारसा-गरमें एक रत्न हो, ऐसे इस मेरेविषे तुम निरंतर अनुकूल रहो, तहां तुमको अनुकूल करनेमेंही मेरा मन अत्यंत यत्न करता है ॥ ३ ॥

**नीलनलिनाभमपि तन्वि तव लोचनं धारयतिकोकनदरूपम् ॥**
**कुसुमशरबाणभावेन यदि रंजयसि कृष्णमिदमेतदनुरूपम् ॥ ४ ॥**

सं० टी०–नीलेति । हे तन्वि कृशांगि नीलनलिनस्य नीलोत्पलस्येवाभा कांतिर्यस्य तत्तव लोचनं कोकनदरूपं रक्तोत्पलसरूपतां धारयति धत्ते रोषारुण-त्वात् । यदि इदं चक्षुः कृष्णं श्यामं कुसुमशरः कामस्तस्य बाणाः पुष्पाणि

तेभ्यो भाव उत्पत्तिर्यस्य मधुनस्तेन रंजयसि रक्तं करोषि तदा एतद्रक्तं रूपं अनुरूपं योग्यं भवति । यदि मधुपानं करोषि तदा नेत्रस्य रक्तत्वमुचितं न रोषादिति भावः ॥ ४ ॥

भा० टी०—हे सूक्ष्मांगी ! तुझारे नीलकमलसरीखे भी नेत्र लालकमलसरीखी कांतिको धारण करते हैं. सो यदि यह कांले नेत्र कामदेवके बाणोंका भाव करके लाल करती हो. तो यह योग्यही है ॥ ४ ॥

किंचित्प्रसन्नां वीक्ष्याह—

**स्फुरतु कुचकुंभयोरुपरि मणिमंजरी रंजयतु तव हृदयदेशम् ॥**
**रसतु रशनापि तव घनजघनमंडले घोषयतु मन्मथनिदेशम् ॥ ५ ॥**

सं० टी०—स्फुरत्विति । हे राधे मणिमंजरी हारलता तव कुचकुंभयोः कुचकलशयोरुपरि स्फुरतु शोभतां सा रत्नलता तव हृदयदेशं वक्षःप्रदेशं रंजयतु स्वरश्मिभिः शोभयतु तव घनजघनमण्डले निबिडकटिपुरोभागदेशे रशनापि कांच्यपि रसतु शब्दं करोतु सा कांची मन्मथनिदेशं कामाज्ञां घोषयतु शब्दायतां । वचनचातुर्येण स्फुरतु मणिमंजरी रसतु रसनापि इत्यादिना विपरीतरतं याचते ॥ ५ ॥

भा० टी०—हे राधे ! तुम्हारे कुच कलशोंपर हारलता स्फुरती रहो, तुम्हारे हृदयको शोभित करो, और तागडी भी शब्द करो; व तुम्हारे घनजघनमंडलपर कामदेवकी आज्ञाको घोष करो अर्थात् शब्द करो ॥ ५ ॥

**स्थलकमलगंजनं मम हृदयरंजनं जनितरतिरंगपरभागम् ॥**
**भण मसृणवाणि करवाणि चरणद्वयं सरसलसदलक्तकसुरागम् ॥ ६ ॥**

सं० टी०—हे मसृणवाणि स्निग्धवचने भणाऽऽज्ञापय अहं तव चरणद्वयं सरसः सांद्रः सह रसेन श्रृंगारेण वर्तते इति वा सरसं यथा स्यादेवं लसत् शोभमानः अलक्तकरागो यावकरागो यत्र एतादृशं करवाणि कुर्यां । प्रार्थनायां

लोट्। कथंभूतं चरणद्वयं स्थलकमलस्य गंजनं तिरस्कारकसदृशमित्यर्थः। पुनः कीदृशं मम हृदयरंजनं अनुरागकारकं। पुनः कीदृशं जनित उत्पादितो रतिरंगे सुरतकौशले संभोगरागस्य वापरभागः परस्परशोभा येन। मयालक्तकेन चेदिदं रज्यते तदेदमपि क्रौंचबंधादौ मम हृदये लग्ने लग्नां मत्परां शोभां परस्परं दास्यतीतिभावः॥ ६॥

भा० टी०–हे स्निग्धबचन बोलनेवाली! आज्ञा करो, तुम्हारे दोनों चरणोंको रसपूर्वक शोभमान मेंहदीसे सुंदर रंजित (लाल) करदूं (कैसे चरणहैं कि) स्थलकमलका तिरस्कार करनेवाले हैं, और मेरे हृदयको रंगनेवाले हैं, रमणसमयमें परस्पर शोभा उत्पन्न करनेवाले हैं॥ ६॥

स्मरगरलखंडनं मम शिरसि मंडनं देहि पदपल्लवमुदारम्॥
ज्वलति मयि दारुणो मदनकदनानलो हरतु तदुपहितविकारम्॥७॥

सं० टी०–स्मरेति। त्वं उदारं मनोहरं पदपल्लवं मम शिरसि मंडनं अलंकारमिव देहि अर्पय। कीदृशं पदपल्लवं स्मरगरलस्य कामविषस्य खण्डनं नाशकं कामपीडानिवर्तकमित्यर्थः। मयि दारुणः क्रूरकर्मा मदनकदनानलः कामपरितापवह्निः ज्वलति दीप्यते। पदपल्लवं कर्तृ तदुपहितविकारं मदनकृतोपतापं हरतु। शिरःपीडानिवर्त्तनेन शरीरपीडानिवृत्तिरिति शिरसि दानं अथवा पल्लवाच्छादितशिरसः सूर्यतापो न भवतीति॥ ७॥

भा० टी०–हे राधे! कामरूपी विषके नाशक, उदार, अपने पाँदपल्लवको मेरे शिरपर अलंकारकी तरह स्थापित करो, (क्योंकि) मेरेविषे दारुण कामसंतापरूप अग्नि जलता है, उसके विकारोंको हरो॥ ७॥

इति चटुलचाटुपटुचारु मुरवैरिणो राधिकामधिवचनजातं॥
जयति जयदेवकविभारतीभूषितं मानिनीजनजनितशातम्॥ ८॥

इति श्रीगीतगोविंदे ऊनविंशतितमः प्रबंधः॥ १९॥

सं० टी०—इतीति । इत्यमुना प्रकारेण मुरवैरिणः कृष्णस्य राधिकां अधि अनुराधिकां लक्षीकृत्य प्रोक्तं वचनजातं वाक्यसमूहो जयति उत्कर्षेण वर्द्धते। कीदृशं चटुलं चाटुप्रीतियुक्तं पटु चतुरं चारु सुकुमारं । पुनः कीदृशं जयदेव-कवेः भारत्या वाण्या भूषितं मानिनीजनस्य जनितं शातं सुखं येन तत्तादृशं जयति । 'पद्मावतिरमणजयदेवकविभारतीभाणितमतिशात' मिति पाठांतरे पद्मा-वती जयदेवस्य पत्नी तस्या रमणो वल्लभो यो जयदेवस्तेन भारतीसंज्ञया क-वित्वं वर्णितं । पुनः कीदृशं अतिशातं अतिशयितसुखं यस्मात्तादृशमिति व्या-ख्यानं मंदं तथा सति पौनरुक्त्यापत्तेः प्रथमपाठस्तु समीचीनएव ॥ ८ ॥

भा० टी०—ईसप्रकारसे राधाजीके उद्देश करके श्रीकृष्णके कहेहुए प्रीतियुक्त चतुर सुंदर बचनसमूह जयदेवकविकी वाणीसे विभूषितहुए और स्त्रियोंको सुख उत्पन्न करने-वाले हुए सर्वोत्कर्षसे बढ़ो ॥ ८ ॥

इति श्रीगीतगोविंदस्य रसिकप्रियानाम भाषाटीकायां उनविंशतितमः प्रबंधः ॥ १९ ॥

इदानीमात्मानं निरपराधं ज्ञापयन् संभोगार्थं प्रोत्साहयन्नाह—

**श्लोकः ॥ परिहर कृतातंके शंकां त्वया सततं घनस्त-**
**नजघनया क्रांते स्वांते परानवकाशिनि ॥ विशति**
**वितनोरन्यो धन्यो न कोऽपि ममांतरं स्तनभ-**
**रपरीरंभारंभे विधेहि विधेयताम् ॥ १ ॥**

सं० टी०—परिहरेति । हे कृतातंके विहितकोपे राधे त्वं शंकां त्यज त्वया क्रांते व्याप्ते सति वितनोः कामादन्योः धन्यः जनः कोपि ममांतरं अभ्यंतरं न विशति न प्रविशति । कीदृश्या त्वया घने कठिने स्तनजघने यस्याः तया। कीदृशे स्वांते अतएव परानवकाशिनि अन्यस्यावकाशशून्ये हे प्रणयिनि यतो ममांतरं काम एव विशति अतस्तनभरपरिरंभारंभे स्तनातिशयालिंगनोद्योगे विधीयतां कर्तव्यतां विधेहि कुरु मामालिंगेत्याशयः ॥ १ ॥

भा० टी०—हे विहितकोपवाली ! राधे ! मेरेविषे शंका मत कर. कठोर स्तन और जंघोंवाली तुमसे निरंतर आकर्षित हुए विषे और तुम्हारे स्वाधीन तथा अन्यकिसीके

अवकाशसे रहित हुए मेरे विषे कामदेवसे अन्य धन्य कोई भी जन मेरेभीतर नहीं प्रवेशता है ( इसलिये स्तनोंके अत्यंत आलिंगनके उद्योगमें कर्तव्यताका विधान करो ( आज्ञा दो ) ॥ १ ॥

यद्येवं न प्रत्येषि तदा मय्यपराधानुकूलं दंडमाचरेत्याह—

**श्लोकः ॥ मुग्धे विधेहि मयि निर्दयदंतदंशं दोर्वल्लि-बंधनिबिडस्तनपीडनानि ॥ चंडि त्वमेव मुदमंचय पंचबाणचंडालकांडदलनादसवः प्रयांति ॥ २ ॥**

सं टी०—मुग्धेति । हे मुग्धे मूढे सुंदरि वा मयि निर्दयदंतदंशं दयारहित-दंतक्षतं विधेहि कुरु । किंच दोर्वल्लिबंधो भुजलताबंधस्तेन निबिडं दृढं यथा स्यात्तथा स्तनाभ्यां पीडनानि विधेहि । हे चंडि कोपनशीले त्वमेव मम मुदं प्रीतिं अंचय जनय । नत्वन्यसां ममानुराग इत्यर्थः । उद्वहेति पाठे कुरु । नोचेत् पंचवाणः कामः स एव चंडालस्तस्य कांडदलनाद्बाणक्षतात् असवः मम प्राणाः प्रयांति गच्छंति । अतो मयि प्रसीदेत्यर्थः ॥ २ ॥

भा० टी०—हे सुंदरि! मेरेपर निर्दयतासे दांतोंका क्षत करो, और भुजारूपी लतासे दृढ बंध हो जैसे तैसे कुचाओंका पीड़न करो; हे क्रोधवाली! राधे! तुमही प्रीति उत्पन्न करो ( क्योंकि ) कामरूपी चांडालके बाणकेआघातसे ( मेरे ) प्राण निकसे जाते हैं॥२॥

ननु कोपो नास्त्येवेत्यत आह—

**श्लोकः ॥ शशिमुखि तव भाति भंगुरभ्रूर्युवजनमोहक-रालकालसर्पी ॥ तदुदितभयभंजनाय यूनां त्वदधरसी-धुसुधैव सिद्धमंत्रः ॥ ३ ॥**

सं टी०—शशीति । हे शशिमुखि चंद्रवदने तव भंगुरभ्रूः कुटिला भ्रुकुटि भाति शोभते । कीदृशी युवजनानां तरुणजनानां मोहाय कराला भीषणा का-लसर्पी कृष्णाहिवधूः तस्याः भ्रुवः सकाशादुदितं उत्पन्नं यद्भयं तस्य भंजनाय नाशाय यूनां तरुणानां तवाधरसीधु मद्यं तदेव सुधापानसाम्यान्माधुर्याच्च सैव

सिद्धमंत्रः साधितमंत्रः । विषापहरणार्थं अधरपानं दत्त्वा तव कोपसर्पदष्टस्य मम जीवनं संपादयेतिभावः ॥ ३ ॥

भा० टी०–हे चंद्रमुखी ! तुम्हारी टेढ़ी भ्रुकुटी शोभित है यह जवानं पुरुषोंके मोहनेमें भयंकर सर्पिनी है इससे उत्पन्न हुए भयको दूर करनेके वास्ते जवाँन पुरुषोंको तुम्हाराअधर मद्य ( ओष्ठरूपी मदिरा ) का अमृतही सिद्ध मंत्र है ॥ ३ ॥

**श्लोकः ॥ व्यथयति वृथा मौनं तन्वि प्रपंचय पंचमं**
**तरुणि मधुरालापैस्तापं विनोदय दृष्टिभिः ॥ सुमुखि**
**विमुखीभावं तावद्विमुंच न वंचय स्वयमतिशयस्निग्धो**
**मुग्धे प्रियोहमुपस्थितः ॥ ४ ॥**

सं० टी०–व्यथयतीति । हे तन्वि सुंदरि तव वृथामौनं मां व्यथयाति तस्मात् । तरुणि मधुरालापैः कोमलवचनैः पंचमरागं प्रपंचय उद्गिर । दृष्टिभिः अवलोकनैस्तापं मानसं तापं विनोदय अपसारय । हे सुमुखि सुवदने विमुखीभावं दुष्टदृष्टित्वं विमुंच त्यज । हे मुग्धे ज्ञानशून्ये अहं प्रियः स्वयं आकरणं विनैव उपस्थितः आगतः अतएव मे वचनं न वंचय नोल्लंघस्व । कीदृशः प्रियः अतिशयस्निग्धः महावत्सलः स्वयमागतः हातुं नोचित इति भावः ॥ ४ ॥

भा० टी०–हे तन्वि ! ( सूक्ष्मांगी ) यह तुम्हारा, वृथा मौनं मुझको बाधा करता है हे तरुणी ! मधुर संभाषण करके पंचम रागको उच्चारण करो, ( और ) अपनी दृष्टियोंसे ( मेरे ) संतापको दूर करो हे सुमुखी ! पहले विमुखपनेको त्याग दो. हे मुग्धे ( ज्ञानशून्य ) अत्यंत स्नेहवाला मैं ( तुम्हारा )प्रिय आपही चलाआयाहूं. इसलिये, ( मेरे बचनको ) मत उल्लंघन करो ॥ ४ ॥

अधुना मानापनोदनाय तदंगस्तुतिं करोति–

**श्लोकः ॥ बंधूकद्युतिबांधवोयमधरः स्निग्धो मधूकच्छविर्गंडश्चंडि चकास्ति नीलनलिनश्रीमोचनं लोचनम् ॥**
**नासाभ्येति तिलप्रसूनपदवीं कुंदाभदंति प्रिये प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः ॥ ५ ॥**

सं॰ टी॰—बंधूकेति। हे चंडि कोपनशीले तवायमधरः बंधूकपुष्पस्य द्युतिः कांतिस्तस्या बांधवो मित्रसदृशश्चकास्ति शोभते तथा स्निग्धश्चिक्कणः गंडः कपोलश्चकास्ति । कीदृशः मधूकपुष्पवच्छविर्दीप्तिर्यस्य सः तथा । तव लोचनं नेत्रं नीलनलिनश्रियं नीलोत्पलस्य कांतिं मोचयति। तव नासा नासिका तिलप्रसूनस्यतिलपुष्पस्य पदवीं मार्गसादृश्यमित्यर्थः अभ्येति प्राप्नोति। हेकुंदाभदंति कुंद पुष्पस्येवाभा येषां तादृशा दंता यस्यास्तादृशि हे प्रिये वल्लभे प्राय इति तर्कयामि प्रसिद्धः पुष्पायुधः पुष्पमेवायुधं शस्त्रं यस्यसः कामस्त्वन्मुखसेवया विश्वं जगद्विजयते वशीकरोतीत्यर्थः । यानि कामस्य पुष्पायुधानि तानि बन्धूकमधूकनीलोत्पलतिलकुंदपुष्पादीनि त्वन्मुखे वर्तंत इति । सेवाकारःबंधूक दुपहरिया मधुक इति महुआइति कान्यकुब्जभाषायाम् ॥ ५ ॥

भा॰ टी॰–हे चंडि! (गुस्सेबाज!) राधे; तुम्हारा, यह अधरोष्ठ बंधूक (दुपहरिया) पुष्पका मित्रसरीखा (लाल) (और) चिकना (तथा) महुआके पुष्पसरीखी छबिवाला गंडस्थल शोभित हो रहा है. (और) नेत्र नीलेकमलकी कांतिको दूर करने वाले हैं. नासिका तिलके पुष्पकी पदवीको प्राप्त होती है. हे कुंदपुष्पसरीखे दांतोंवाली प्रिये! प्रायः मैं यह तर्क करताहूं कि तुम्हारे मुखकीही सेवा करके वह कामदेव विश्वको जीतता है ॥ ५ ॥

**श्लोकः ॥ दृशौ तव मदालसे वदनमिंदुमत्यान्वितं गतिर्जनमनोरमा विधुतरंभमूरुद्वयम् ॥ रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवावहो विबुधयौवतं वहसि तन्वि पृथ्वीगता ॥ ६ ॥**

सं॰ टी॰—दृशाविति । अहो इत्याश्चर्ये हे तन्वि सुंदरि त्वं पृथ्वीगता भूम्यां स्थितापि विबुधयौवतं देवयुवतीनां समूहं वहसि । केन प्रकारेणेत्यत आह तव दृशौ नयने मदेनालसे मंथरे अवलोकनाय मंदायतः । तव वदनं मुखं इंदुमत्या चंद्रबुद्ध्या अन्वितं युक्तं त्वन्मुखदर्शनेन सादृश्याच्चंद्रबुद्धिर्भवतीत्यर्थः । तव गतिर्गमनं जनमनोरमा । तवोरुद्वयं जंघायुग्मं विधुता स्वशो-

भया तिरस्कृता रंभा कदली येन । तव रतिः सुरतक्रीडा कलावती कामकला कौशलयुक्ता । तव भ्रुवौ रुचिरा चित्राणां लेखा ययोस्ते यथा चित्रे श्यामा लेखा विलिख्यते तथेति । तदनया पदयोजनया मदालसाइंदुमतिमनोरमारंभा कलावतीचित्रलेखासंज्ञका अप्सरसः प्रतिपादिताः पृथ्वीगतेत्यपि च एकस्यामपि त्वयि सर्वासामप्सरसां गुणा वर्तंत इत्याश्चर्यं । प्रेयोनामालंकारः पृथ्वीनामकं चेदं छंदः ॥ ६ ॥

भा० टी०–अहो! (आश्चर्य) है. हे सूक्ष्मांगि! पृथ्वी लोकमें बसती हुईभी (तुम) देवतोंकी स्त्रीसमूहोंके लक्षणको धारण करतीहो. कैसे कि तुम्हारे नेत्र मदसे आलस्ययुक्त हैं; मुख चंद्रमाकी बुद्धि करानेवाला है, गति मनुष्योंके मनको रमण करानेवाली है, दोनों जंघा केलाकी शोभाको दूर करती हैं, तुम्हारी रति कामकलाकी चतुराईमें निपुण है सुंदर चित्ररेखावाली भ्रुकुटी हैं ऐसे सर्वोत्कृष्ठा हो, ॥ ६ ॥

कविः सर्गांते आशिषं प्रयुंक्ते–

श्लोकः ॥ प्रीतिं वस्तनुतां हरिः कुवलयापीडेन सार्धं
रणे राधापीनपयोधरस्मरणकृत् कुंभेन संभेदवान् ॥
पत्रे बिभ्यति मीलति क्षणमपि क्षिप्रं तदालोकना-
द्व्यामोहेन जितं जितं जितमभूद्व्यालोलकोलाहलः॥ ७॥

## इति श्रीकविराज श्रीजयदेवकृते गीतगोविंदे महाकाव्ये मानिनीवर्णने चतुरचतुर्भुजोनाम सटीको दशमः सर्गः ॥ १० ॥

सं० टी०–प्रीतिमिति । हरिः कृष्णो वः युष्माकं गायतां शृण्वतां प्रीतिमानंदं तनुतां विस्तारयतु । कीदृशः रणे संग्रामे कुवलयापीडेन कंसहस्तिना सार्द्धं सह कुंभस्थले हस्तेन संभेदवान् संबद्धः अतस्तत्र कुम्भे राधापीनपयोधर स्मरणकृत् राधिकायां मांसलस्तनस्मृतियुक्तः । हस्तिदर्शनेन पीनकुचस्मरणं युज्यत एव । तदुक्तं "सदृशा दृष्टिचित्ताद्याः स्मृतिजीवस्य बोधकाः" । पत्रे वाहने बिभ्यति भयंगते सति अथ च मीलति मृते सति जितंजितंजितमिति

कंससंबंधी व्यालोलश्चंचलः कोलाहलः अभूत् जातः । कंसो बालेन जित इति सर्वैर्जनैः कलकलशब्दः कृत इत्यर्थः । वचनकौशलेन मानिनीमानदानात् चतुरः चतुर्भुजः कृष्णो यत्र ॥ ७ ॥

भा० टी०—रणमें कुवलयापीड हस्तीके संग तिसके ( मस्तक ) कुंभस्थलपर हाथका संबंध करनेवाले, राधाजीके कठोर स्तनमंडलका स्मरण करते हुए (और) वह वाहन हस्ती डरगया तथा मरगया तब तिसके देखनेसे विशेष मोह करके शीघ्रही क्षण-काल भी ( जितं जितं जितं ) जीतलीया २ ऐसा चंचल कोलाहल शब्द होता भया ऐसे वह कृष्ण तुम्हारे गानेवाले तथा सुननेवालोंको आनंद बढ़ावो ॥ ७ ॥

इतिश्रीगीतगोविंदस्य रसिकप्रियानामभाषाटीकायां दशमःसर्गः ॥ १० ॥

## अथैकादशः सर्गः प्रारभ्यते ॥

### अब ग्यारहवां सर्ग प्रारंभ होता है ।

अधुना राधां प्रति तत्सखी ब्रूते—

**श्लोकः ॥ सुचिरमनुनयेन प्रीणयित्वा मृगाक्षीं गत-**
**वति कृतवेषे केशवे कुंजशय्याम् ॥ रचितरुचिरभूषां**
**दृष्टिमोषे प्रदोषे स्फुरति निरवसादां कापि राधां जगाद ॥ १ ॥**

सं० टी०—रुचिरमिति । कापि सखी प्रदोषे रजनीमुखे स्फुरति दीप्यमाने सति प्राप्ते इत्यर्थः । राधां जगाद वक्ष्यमाणमितिशेषः । कस्मिन् सति केशवे कृष्णे अनुनयेन प्रीतिवचनेन सुचिरं बहुकालं मृगाक्षीं राधां प्रीणयित्वा संतोषयित्वा कुंजशय्यां लतागृहशयनं गतवति सति । कीदृशे केशवे कृतवेषे कृतश्रृंगारालंकारे राधाया इति । कीदृशीं राधां रचिता कृता रुचिरा मनोहरा भूषालंकारो यया कृष्णस्येति । अन्योन्यालंकारकरणेनान्योन्यरागः सूचितः । कीदृशे प्रदोषे अंधकाराधिक्येन दृष्टिं मुष्णातीति दर्शनचोरके । पुनः कीदृशीं राधां निरवसादां निर्गतः मानसभंगरूपोऽवसादः उपतापो यस्यास्ताम् ॥ १ ॥

भा० टी०— मृगाक्षी तिस राधाको, बहुतकालतक प्रीतिके बचनसे प्रसन्न करके शृंगार वेष करके श्रीकृष्ण भगवान् कुंजशय्या पर चलेगये तब दृष्टिको चुरानेवाले प्रदोष-समय (संध्यासमय) होनेपर संतोपरहित हुई, सुंदर आभूषणोंसे युक्त हुई तिस राधाको कोईकेही (सखी) कहती भई ॥ १ ॥

अथ विंशः प्रबंधो वसंतरागेण रूपकताले गीयते

अब बीसवां प्रबंध वसंत रागकरके रूपकतालमें गाया जाता है—

उक्तार्थं गीतेनाह—

विरचितचाटुवचनरचनं चरणरचितप्रणिपातम् ॥ संप्रति
मंजुलवंजुलसीमनि केलिशयनमनुयातम् ॥ १ ॥ मुग्धे
मधुमथनमनुगतमनुसर राधिके ॥ धृ० ॥

सं० टी०—विरचितेति । वसंतरागः । हे राधिके मुग्धे मूढे अनुगतं अनुकूलं मधुमथनं कृष्णं अनुसर अनुगच्छ । विरचिता उक्ता चाटुः प्रियावचन-रचना परंपरा येन तं । पुनः कीदृशं चरणे पादे रचितः कृतः प्रणिपातः प्रणामो येन तं तन्मानभंगाय । पुनः कीदृशं संप्राति इदानीं मंजुलो मनोहरोऽशोकोवेतसो वा तस्य सीमानि पर्यंते तटे केलिशयनं सुरतार्थशय्यां अनुयातं प्राप्तमित्यर्थः । अतस्त्वया शीघ्रं गंतव्यमिति ॥ १ ॥

भा०टी०—हे मुग्धे! (ज्ञानशून्य) राधे! प्रिय बचन रचना करनेवाले, और चरणोंमें प्रणाम करनेवाले अभी मनोहर बेतोंके तटोंपर रमणकी शय्याके ऊपर प्राप्त भये, अनुकूल हुए, श्रीकृष्णको अनुसर अर्थात् शीघ्रही उसके संग चली जावो ॥ १ ॥

तां प्रोत्साहयंती त्वरयति—

घनजघनस्तनभारभरे दरमंथरचरणविहारम् ॥
मुखरितमणिमंजीरमुपैहि विधेहि मरालविकारम् ॥ २ ॥

सं० टी०—घनेति । घनयोर्मांसलयोर्जघनस्तनयोर्भारस्य भरो भाराधिक्यं यस्यास्तत्संबोधनं दरमंथर ईषन्मंदश्चरणविहारः पदाक्रमो यस्यां क्रियायां मुख-

रितः शब्दितः मणिमंजीरो मणिसाहितमंजीरो यस्यां क्रियायां तं कृष्णमुपैहि उपगच्छ । अतएव मरालानां राजहंसानां विकारं विलासं विधेहि कुरु ॥ २ ॥

भा० टी०—हे घन ( कठिन ) जांघ और स्तनोंके अत्यंत भारवाली ! ( राधे ) कैंछुक मंद २ चरणोंके विहारवाले, शब्दवाले मणिजड़ित नूपरोंवाले श्रीकृष्णको प्राप्तहो. राजहंसोंके विलास क्रीडाओंको करो ॥ २ ॥

अन्यमप्युद्दीपनविभावं वर्णयति—

**शृणु रमणीयतरं तरुणीजनमोहनमधुरिपुरावम् ॥**
**कुसुमशरासनशासनबंदिनि पिकनिकरे भज भावम् ॥ ३ ॥**

सं० टी०— शृण्विति । त्वं रमणीयतरं अतिमनोहरं श्राव्यं तरुणीजनानां मोहनं मधुरिपोः कृष्णस्य रावं वंशशब्दं शृण्वाकर्णय । मधुपविरावमिति पाठे भ्रमरशब्दं । किंच पिकनिकरे कोकिलसमूहे कुसुमान्येव शरासनं धनुर्यस्य तादृशः कामस्तदाज्ञा तया बंदिनि स्तावके सति भावं कृष्णेऽनुरागं भज आश्रय । हे मानिन्यः मानं त्यक्त्वा यूयं भजनं कुरुतेति कोकिलाः घोषयंतीत्यर्थः ॥ ३ ॥

भा० टी०—हे राधे ! तुम, अत्यंत रमणीक युवतिजनोंको मोहनेवाले, श्रीकृष्णकी वंशीके शब्दको सुनों; कोयल पक्षीसमूह होतसंते कामदेवकी आज्ञाका प्रस्तार होनेपर श्रीकृष्णविषे अनुराग करो ॥ ३ ॥

**अनिलतरलकिसलयनिकरेण करेण लतानिकुरंबम् ॥**
**प्रेरणमिव करभोरु करोति गतिं प्रतिमुंच विलंबम् ॥ ४ ॥**

सं० टी०—अनिलेति । हे करभोरु करभः कनिष्ठांतो मणिबंधपर्यंतकरस्य बहिर्भागस्तद्वदूरू यस्यास्तत्संबोधनं गतिं गमनंप्रति विलंबं मुंच शीघ्रं गच्छेति यावत् । यतः लतानिकुरंबं लतासमूहं अनिलेन तरलश्चंचलो यः किसलयनिकरः पल्लवसमूहस्तद्रूपेण करेण हस्तेन तव प्रेरणमिव ज्ञापनमिव करोति । अचेतना लतापि त्वां प्रेरयति किं पुनरहम् ॥ ४ ॥

भा० टी०—हे करभोरु ! ( हथेलीके प्रांतभागसरीखी गोल जंघावाली ! ) राधे ! गमन करनेमें विलंब मतकर, क्योंकि, यह लतासमूह वायुसे चंचलहुए पत्ररूप हाथसे प्रेरणासी करताहै ॥ ४ ॥

अपि च--

स्फुरितमनंगतरंगवशादिव सूचितहरिपरिरंभम् ॥
पृच्छ मनोहरहारविमलजलधारममुं कुचकुंभम् ॥ ५ ॥

सं० टी०--स्फुरितमिति । हेराधे त्वं अमुं कुचकुंभं स्तनद्वयं पृच्छ सम्यगतिवर्तुलत्वात्काठिन्यवत्त्वाच्च कुंभसाम्यम् । कीदृशं कुचकुंभं अनंगस्य कामस्य ये तरंगा विकारास्तद्वशादिव स्फुरितं सकंपं अतएव सूचितः हरेः परिरंभः आलिंगनं येन । अन्योपिकलशो नद्यां तरंगैः प्रेर्य्यमाणः सकंपो भवति । इवशब्दोऽत्रोत्प्रेक्षाद्योतकः । पुनः कीदृशं मनोहरो यो हारः स एव विमला निर्मला जलधारा यत्र ॥ ५ ॥

भा० टी०--हे राधे ! तुम कामदेवके तरंगोंके बशसे मानों कंपित होरहाहै ऐसे, श्रीकृष्णके आलिंगनकी सूचना करानेवाले, मनोहर हाररूपी विमल जल धारावाले, इस कुचकलशको पूंछो ॥ ५ ॥

अधिगतमखिलसखीभिरिदं तव वपुरपि रतिरणसज्जम् ॥
चंडि रसितरशनारवडिंडिममभिसरसरसमलज्जम् ॥ ६ ॥

सं० टी०--अधिगतमिति । हे चंडि अत्यंतकोपने इत्याक्षेपे संबोधनं । अखिलसखीभिरपि तवेदं वपुः शरीरं रतिरणे सुरतसंग्रामे सज्जं सन्नद्धं अधिगतं ज्ञातं । तव मनसि अभिमानो नास्तीत्यर्थः । एवं सति रसिता शब्दिता रशना क्षुद्रघंटिका सैव आरवडिंडिमो वाद्यविशेषो यस्यां क्रियायां सरसं सोत्कंठं यथा स्यात्तथा अलज्जं लज्जारहितं यथा स्यात्तथाऽभिसर कृष्णमित्यध्याहारः ॥ ६ ॥

भा० टी०--हे चंडि ! कोपवति ! ! राधे ! ! ! तुम्हारा यह शरीर भी रमणरूपी युद्धमें सन्नद्धहै ( तैयारहै ) यह सब सखियोंने जानलिया इससे, बाजतीहुई तागड़ीका डिमडिम बाजासरीखा और सरस तथा लज्जारहित हो जैसे तैसे कृष्णके पास जावो॥६॥

स्मरशरसुभगनखेन सखीमवलंब्य करेण सलीलम् ॥
चल वलयक्वणितैरवबोधय हरिमपि निजगतिशीलम् ॥ ७ ॥

सं० टी०-स्मरेति । हेराधे त्वं करेण हस्तेन सखीं अवलंब्य सलीलं सविलासं यथा स्यात्तथा चल गच्छ । कीदृशेन करेण स्मरशरवत्कामबाणवत्सुभगानि सुंदराणि नखानि यस्मिन् रणे शस्त्राणि भवंति रतिरणे तु त्वन्नखान्येव स्मरस्य शस्त्राणीति भावः । गत्वा च वलयक्कणितैः कंकणशब्दैः हरिं कृष्णं अवबोधय अहमागतेति ज्ञापयेत्यर्थः । अपि क्रियासमुच्चये । कथंभूतं हरिं निजे आत्मनि गतिर्यस्य स निजगतिः कामस्तास्मिन् शीलं समाधिश्चित्तैकाग्र्यं यस्य कामपरवशमित्यर्थः ॥ ७ ॥

भा० टी०-हे राधे ! तुम, कामबाणकी तरह सुंदर नखवाले, हाथकरके सखीका अवलंब ( सहारा ) लेके, लीलापूर्वक चलो ? कामदेवमें समाधि लगायेहुए श्रीकृष्णको भी कंकणोंके शब्दोंकरके मैं आगई हूं, ऐसा बोध कराओ ॥ ७ ॥

श्रीजयदेवभणितमधरीकृतहारमुदासितवामम् ॥
हरिविनिहितमनसामधितिष्ठतु कंठतटीमविरामम् ॥ ८ ॥
इति श्रीगीतगोविंदे विंशतितमः प्रबंधः ॥ २० ॥

सं० टी०-श्रीजयदेवेति । श्रीजयदेवेन भणितं गीतं हरौ कृष्णे विनिहितमारोपितं मनश्चित्तं यैस्तेषां भक्तानां कंठतटीं आविरामं सर्वदा अधितिष्ठतु कंठदेशे वसत्वित्यर्थः । अधिशीङ्स्थासां कर्म । कीदृशं भणितं अधरीकृतः स्वगुणैर्हीनः कृतः मुक्ताहारो येन । पुनः कीदृशं उदासिता स्वगुणैस्तिरस्कृता वामा सुंदरी येन । यद्यपि हारस्य रमणं च कंठदेशस्थितस्य या शोभा तत्प्रदत्वं संभवति तथापि तयो रागिणामेव शोभाप्रदत्वं नतु मुमुक्षूणां तत्रापि तारुण्य एव नतु सर्वदा । जयदेवभणितं तु कृष्णकथात्वेन हारापेक्षया चाधिकमित्यर्थः ॥ ८ ॥

भा० टी०-अपने गुणोंकरके, मोतियोंके हारको नीचा करनेवाला और, स्त्रियोंकोभी न्यून करनेवाला यह, श्रीजयदेवसे कहाहुआ, गीत, श्रीकृष्णविषे चित्त लगानेवाले भक्तोंके, कंठदेशमें निरंतर ठहरो ॥ ८ ॥

इति श्रीगीतगोविंदस्यरसिकप्रियानाम भाषाटीकायां विंशतितमः प्रबंधः ॥ २० ॥

इदानीं सखी कृष्णस्य स्नेहातिशयमाह—

**श्लोकः ॥ सा मां द्रक्ष्यति वक्ष्यति प्रियकथां प्रत्यंगमालिंगनैः प्रीतिं यास्यति रंस्यते सखि समागम्येति चिंताकुलः ॥ स त्वां पश्यति वेपते पुलकयत्यानंदति स्विद्यति प्रत्युद्गच्छति मूर्च्छति स्थिरतमःपुंजे निकुंजे प्रियः ॥ १ ॥**

सं० टी०—सा मामिति हे राधे स प्रियः कृष्णः स्थिरे निश्चले तमःपुंजे अंधकारसमूहे अन्यत्र तस्मिन्निकुंजे लतागृहे त्वां पश्यति ध्यानेन दृष्ट्वापि किमियं परुषं मधुरं वदिष्यतीति भयात् वेपते कंपते पुलकयति अंगानित्यर्थात् ध्यानेनैव तदालिंगनं परिकल्प्य सरोमांचो भवतीत्यर्थः । ध्यानेन त्वत्सुरतकेलिं परिकल्प्य स्विद्यति पश्चात्केलिं कृत्वा उत्थाय गंतुं प्रवृत्तायां त्वयि प्रत्युद्गच्छति प्रत्युत्थानं करोति ततः ध्यानविच्छेदे त्वामदृष्ट्वा मूर्च्छति । कीदृशः प्रियः चिंताकुलः चिंतायुक्तः । इतीतिकिं हे सखि सा राधा मां द्रक्ष्यति अनुकूलतया ईक्षते । दृष्ट्वा च प्रियकथां मनोहरां कथां वक्ष्यति वदिष्यति । उक्त्वा प्रत्यंगं प्रत्यवयवं प्रति आलिंगनैः प्रीतिं संतोषं यास्यति प्राप्स्यति समागम्य मिलित्वा रंस्यते मया सह क्रीडिष्यति इति प्रश्ने । समागम्येति पूर्वार्द्धे सर्वत्र योज्यं । दीपकालंकारः शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

भा० टी०—हेराधे ! वह प्रिय श्रीकृष्ण निश्चल अंधकार समूहवाले कुंजघरमें ध्यानकरके तुमको देखताहै, कंपताहै, कभी रोमांचित होताहै, आनंदको प्राप्त होताहै, पसीनायुक्त होताहै, अभ्युत्थान करताहै, मूर्छित होताहै. कैसाहै कि, चिंतासे आकुल हुआ ऐसे विचारताहै कि, हे सखि ! वह राधा मुझको ( अनुकूलतासे ) देखेगी ? प्रियवार्ता कहेगी ? अंगअंगके आलिंगनसे प्रीतियुक्त होवेगी ? मिलापकरके रमण करेगी ? ॥१॥

गमनकालयोग्यं अंधकारं वर्णयति—

**श्लोकः ॥ अक्ष्णोर्निक्षिपदंजनं श्रवणयोस्तापिच्छगुच्छावलिं मूर्ध्नि श्यामसरोजदाम कुचयोः कस्तूरिकापत्रकम् ॥ धूर्तानामभि-**

**भिसारसत्वरहृदां विष्वङ् निकुंजे सखि ध्वांतं नीलनिचोलचारु सुदृशां प्रत्यंगमालिंगति ॥ २ ॥**

सं० टी०—अक्ष्णोरिति । हे सखि राधे ध्वांतं अंधकारःसुदृशां नायिकानां प्रत्यंगं प्रत्यवयवं आलिंगति आश्लिष्यति । किं कुर्वत् अक्ष्णोर्नेत्रयोरंजनं कज्जलं निक्षिपत् विन्यस्यत् । श्रवणयोः कर्णयोः तापिच्छगुच्छावलिं तमालपुष्पस्तबककर्णपूरपंक्तिं निक्षिपत् । कुचयोः स्तनयोः कस्तूरिकापत्रकं मृगमदपत्रावलिं निक्षिपत् । मस्तके श्यामसरोजदाम नीलकमलमालां निक्षिपत् । कीदृशीनां सुदृशां धूर्तानां परिवंचकानां । पुनः कीदृशीनां विष्वक् सर्वत्र निकुंजे लतागृहे अभिसारसत्वरं गमनायससाहसं हृत् यासांतास्तासां । कीदृशं ध्वांतं नीलनिचोलवत् श्यामवस्त्रवत् । चारु सदृशमित्यर्थः । नीलवस्त्रस्थाने ध्वांतं जातमित्यर्थः । अतो भूषणादि निर्माणेनापि कालातिक्रमो न युक्त इतिभावः ॥ २ ॥

भा० टी०—हे सखी ! ( धूर्ता ) ठगनेवाली सबतर्फसे निकुंजघरमें शीघ्रही गमनके वास्ते साहसयुक्त हृदयवाली, कामिनियोंके नेत्रोंमें अंजन घालताहुआ, कानोंमें तमालवृक्षके पुष्पोंके गुच्छोंकी पंक्ति घालताहुआ, मस्तकपर श्याम कमलकी माला, कुचाओंपर कस्तुरीका पत्र डालताहुआ, नील वस्त्रके समान सुंदर, यह अंधकार ( सब कामिनियों के ) अंगअंगका आलिंगन करताहै ॥ २ ॥

अंधकारमेव वर्णयति—

**श्लोकः ॥ काश्मीरगौरवपुषामभिसारिकाणामाबद्धरेखमभितो मणिमंजरीभिः ॥ एतत्तमालदलनीलतमं तमिस्रं तत्प्रेमहेमनिकषोपलतां तनोति ॥ ३ ॥**

सं० टी०—काश्मीरेति । हे राधे एतत्तमिस्रं अन्धकारः तत्प्रेम तासामभिसारिकाणां यत्प्रेम प्रीतिस्तदेव हेम सुवर्णं तस्य निकषोपलतां घर्षणपाषाणतां तनोति विस्तारयति । कीदृशं तमिस्रं काश्मीरं कुंकुमं तद्वद्गौरं पीतं वपुर्यासां तासामभिसारिकाणां स्त्रीणां मणिमंजरीभिः मणिकिरणैः अभितः सर्वतः आबद्धा कु-

तरेखा यस्मिन् तमालदलं नूतनपत्रं तद्वन्नीलतमं अतिश्यामं । " कांतार्थिनी तु या याति संकेतं साभिसारिका " इत्यमरः । इत्यभिसारिकालक्षणं । अभिसारिकाणां प्रेमपरीक्षासमयस्त्वयमेव यदंधतमासि गमनामिति ॥ ३ ॥

भा० टी०–हे राधे ! कुंकुम सरीखे पीले शरीरवाली, अभिसारिका स्त्रियोंके, मणिजडित ( नूपुर ) बिछुयनकी किरणोंसे सबतर्फ रेखावाला, यह तमालपत्र सरीखा अत्यंत नील अंधकार तिनें स्त्रियोंके प्रेमरूपी सुवर्णकी परीक्षा करनेवाला, निकषोपल ( कसौटी) का पत्थरसा मालूम होताहै ॥ ३ ॥

श्लोकः ॥ हारावलीतरलकांचनकांचिदामकेयूरकंकण-
मणिद्युतिदीपितस्य ॥ द्वारे निकुंजनिलयस्य हरिं
निरीक्ष्य व्रीडावतीमथ सखी निजगाद राधाम् ॥ ४॥

सं० टी०–हारावलीति । अथानंतरं सखी राधां निजगाद पुनरपि उवाच। कथंभूतां राधां निकुंजनिलयस्य लतागृहमेव निलयं निभृतगृहं तस्य द्वारे हरिं कृष्णं निरीक्ष्य दृष्ट्वा व्रीडावतीं सलज्जां अस्मिन्मया कति निष्ठुराणि वचांसि उक्तानि संप्रति तत्समक्षं कथं यामीति लज्जां । कीदृशस्य निकुंजनिलयस्य मुक्ताहारमध्यद्युमणेः द्युत्या कांचनकांचिदाम्नः सुवर्णकांचीरशनायाः द्युत्या केयूरस्य बाहुभूषणस्य द्युत्या कंकणयोर्द्युत्या एतेषु खचिता ये मणयस्तेषां द्युत्या च दीपितस्य प्रकाशितस्य एतेन ध्वांतेपि दर्शनयोग्यता उक्ता॥४॥

भा० टी०–इससे अनंतर ( कोई ) सखी हारलता, चंचल सुवर्णकी तागडी, बाजूबंध, कंगण, इनमें जडितहुई मणियोंकी कांतिकरके प्रकाशितहुए, निकुंजघरके द्वारपर ( स्थितहुए ) श्रीकृष्णको देखके, लज्जा करतीहुई राधाको कहतीभई ॥ ४ ॥

अथैकविंशतितमः प्रबंधो वराडिरागेण आडवताले गीयते

अबइकीसवां प्रबंध वराडी रागकरके आडवतालमें गायाजाताहै–

वराडिरागे तदेव गीतेनाह–

मंजुतरकुंजतलकेलिसदने ॥ प्रविश राधे माधव
समीपमिह विलस ॥ रतिरभसहसितवदने ॥ १ ॥

सं० टी०— मंज्विति । हे राधे रतिरभसेन सुरतोत्साहेन हसितं हास्ययुक्तं वदनं मुखं यस्यास्तत्संबोधनं इह अस्मिन् मंजुतरं मनोहरं निकुंजाभ्यंतरदेशस्तदेव केलिसदनं क्रीडागृहं तस्मिन् माधवसमीपं प्रविश गच्छ पश्चाद्विलस क्रीडां कुरु ॥ १ ॥

भा० टी०–हे रमणके उत्साहसे हास्ययुक्त मुखवाली ! राधे ! ! यह अतिशय मनोहर कुंजके भीतर रतिस्थानमें, श्रीकृष्णके समीप चलीजावो क्रीड़ा करो ॥ १ ॥

अपि च—

**नवभवदशोकदलशयनसारे ॥ प्रविश० ॥ कुचकलशतरलहारे ॥ २॥**

सं० टी०—नवेति । कुचकलशयोश्चंचलो मुक्ताहारो यस्यास्तत्संबोधनं हे राधे इह क्रीडागृहे माधवसमीपं प्रविश विलस च । कीदृशे इह नवानि नूतनानि भवंति यानि अशोकस्य दलानि पर्णानि तत्कृता शय्या कृष्णशय्या तदेव सारो महाधनं यस्मिन् ॥ २ ॥

भा०टी०–हे कुचकलशोंपर चंचल हारवाली ! ( राधे ) ! ! नवीन अशोक वृक्षके पत्तोंसे बनाईहुई शय्यापर प्राप्तहो, क्रीडाकरो ॥ २ ॥

**कुसुमचयरचितशुचिवासगेहे ॥ प्र० ॥ कुसुमसुकुमारदेहे ॥ ३ ॥**

सं० टी०—कुसुमेति । हे कुसुमवत्सुकुमारो देहो यस्यास्तत्संबोधनं । कीदृशे इह कुसुमचयेन पुष्पसमूहेन रचितं कृतं शुचि अनुपहतं नायिकांतरेणानुपभुक्तं यद्वासगृहं तत्र विलस ॥ ३ ॥

भा० टी०–हे पुष्पवत् सुकुमार ( कोमल ) अंगवाली ! ( राधे ) पुष्पसमूहोंसे रचेहुए पवित्र वासगृहमें प्राप्तहो क्रीड़ा करो ॥ ३ ॥

**मृदुचलमलयपवनसुरभिशीते ॥ प्र० ॥ रसवलितललितगीते ॥४॥**

सं० टी०—मृदुचलेति । हे रसेन वलितं कृतं ललितं मनोहरं गीतं यया तत्संबुद्धिः हे राधे इह केलिसदने विलस । कीदृशे इह मृदुश्चलश्चंचलो यो मलयपवनस्तेन संपर्कवशात् सुरभि एवंभूतं सत् शीतलं तस्मिन् ॥ ४ ॥

भा० टी०—हे रसकरके मनोहर गीत करनेवाली ! राधे ! कोमल चंचल मलयाचलकी वायुकी सुगंधियुक्त शीतल ( शय्यापर ) आप्तहो क्रीड़ाकरो ॥ ४ ॥

विततबहुवल्लिनवपल्लवघने ॥ प्र० ॥ चिरमिलितपीनजघने ॥ ५ ॥

सं० टी०—विततेति । हे चिरमिलिते बहुकाले अनोन्यसंबद्धे पीने मांसले जघने यस्यास्तत्संबुद्धिः । हे राधे इह विलस । कीदृशे इह वितताइतस्ततो विशीर्णा बह्व्यो वल्ल्यो स्तासां नवपल्लवास्तैर्घने निबिडे । शयने इत्यध्याहारः । निबिडशयन इत्यर्थः ॥ ५ ॥

भा० टी०—हे बहुत कालतक परस्पर मिलित भारी जंघावाली ! राधे !! विस्तृतहुई बहुतसी लताओंके नवीनपत्तोंसे व्याप्तहुई (शय्यापर ) आप्तहो क्रीड़ा करो ॥ ५ ॥

मधुमिलितमधुपकुलकलितरावे ॥ प्र० ॥ मदनरभसरसभावे ॥ ६ ॥

सं० टी०—मध्विति । हे मदनरभसः कामरभसः श्रृंगारतस्य भावोऽभिप्रायो यस्यास्तत्संबुद्धिः । कीदृशे इह मधुनि पुष्परसे मिलितानि तत्पानार्थमित्यर्थः । यानि मधुपकुलानि भ्रमरसमूहास्तैः कृतः कलितः रावः शब्दो यस्मिन्॥६

भा० टी०—हे शृंगार रसके भाववाली ! राधे !! पुष्परसके वास्ते लगेहुए भ्रमरसमूहोंसे उत्तम शब्दायमान हुई शय्यापर आप्तहो क्रीड़ा करो ॥ ६ ॥

मधुतरलपिकनिकरनिनदमुखरे ॥ प्र० ॥ दशनरुचिरुचिरशिखरे ॥७॥

सं० टी०—मधुतरलेति । हे दशनरुचिस्तव दन्तदीप्तिरेव रुचिरं शिखरं माणिक्यविशेषो यस्यास्तत्संबुद्धिः । कीदृशे इह मधुना वसंतेन तरलश्चंचलः पिकनिकरः कोकिलसमूहस्तस्य निनदेन शब्देन मुखरे शब्दायिते " पक्वदाडिमबीजाभं माणिक्यं शिखरं विदुः " इतिशाश्वतः ॥ ७ ॥

भा० टी०—हे दांतोंकी कांतिरूप सुंदर माणिक्य रत्नवाली ! राधे ! ! ( यहां ) वसंत ऋतुकरके चंचलहुए कोयल पक्षीसमूहोंके बोलनेसे शब्दायमानहुई ( शय्यापर ) आप्तहो क्रीड़ा करो ॥ ७ ॥

विहितपद्मावतीसुखसमाजे ॥ कुरु मुरारे मंगलशता-
नि भणति जयदेवकविराजराजे ॥ ८ ॥

इति श्रीगीतगोविंदे एकविंशतितमः प्रबंध ॥ २१ ॥

सं० टी०—विहितेति । हे मुरारे कृष्ण त्वं जयदेवकविराजराजे मंगलशतानि कुरु । कीदृशे जयदेवकविराजराजे विहितः कृतः पद्मावत्याः स्वस्त्रियाः सुखसमाजः शुभसमूहो यस्मिन् । एतेन स्वनायिकायामेव प्रेमातिशयो दर्शितः नत्वन्यस्यां । पुनः कीदृशे भणतिच गुणान्वदति क्वचित्प्रविश राधे माधवसमीपभणितेति पाठः ॥ ८ ॥

भा० टी०–हे श्रीकृष्ण ! पद्मावती नामवाली अपनीही स्त्रीको सुखसमूह करनेवाले ( गुणोंको ) कहतेहुए श्रीजयदेव कविराजविषे सैकड़ों मंगल करो ॥ ८ ॥

इतिश्रीगीतगोविंदस्य रसिकप्रियानाम भाषाटीकायां एकविंशतितमः प्रबंधः ॥ २१ ॥

श्लोकः ॥ त्वां चित्तेन चिरं वहन्नयमतिश्रांतो भृशं तापितः कंदर्पेण च पातुमिच्छति सुधासंबाधबिंबाधरम् ॥ अस्यांकं तदलंकुरु क्षणमिह भ्रूक्षेपलक्ष्मीनवक्रीते दासइवोपसेवितपदांभोजे कुतः संभ्रमः ॥ १ ॥

सं० टी०—त्वामिति । हे राधे अयं कृष्णस्तव सुधयाऽमृतेन संबाधं गहन बिंबाधरं पातुमिच्छति । कीदृशः कृष्णः यतः चित्तेन मनसा त्वां चिरं वहन् अतिश्रांतः । यतः कन्दर्पेण भृशं तापितः अन्योऽपि भारवाही सूर्यतापितश्च जलानि पातुमिच्छति तद्वदित्यर्थः । तत्तस्मादस्य कृष्णस्यांकं क्रोडं क्षणं मुहूर्तमात्रं अलं कुरु भूषय । तत्समीपं गंतुं बिभेमीत्यत आह इह कृष्णे संभ्रमो भयं कुतः । कीदृशे इह दास इव सेवक इव स्थिते पुनःकीदृशे भ्रूक्षेपः कटाक्षक्षेपःस एवलक्ष्मीः संपत् द्रव्यं तेन नवक्रीते नूतनः क्रीतो दासोऽतिभीतो भवतीतिभावः । अतएव उपसेवितं पदांभोजं चरणकमलं येन ॥ १ ॥

भा० टी०–हे राधे ! यह श्रीकृष्ण तुम्हारे अमृतकरके गहन अधरोष्ठ पानकी इच्छा करताहै, क्योंकि चित्तकरके तुमको बहुत कालतक धारण करताहुआ अत्यंत हारगया;

और कामदेवसे अतिशय संतप्तहै इसलिये इसकी गोदको क्षणकालतक आभूषित करो और भ्रुकुटीके कटाक्षरूपी धनसे नवीन खरीदेहुए दासकीतरह चरणकमलोंकी सेवा करनेवाले इस श्रीकृष्णविषे भय कहांहै? अर्थात् इससे भय मत करो ॥ १ ॥

श्लोकः ॥ सा ससाध्वससानंदं गोविंदे लोललोचना ॥
सिंजाना मंजुमंजीरं प्रविवेश निवेशनम् ॥ २ ॥

सं० टी०—सेति। सा राधाधिवेशनं लतागृहं प्रविवेश सखीवचनात्। कीदृशी राधा ससाध्वसं विदग्धः कृष्णः कथं मया रंजनीय इति । सानंदं सहर्षं च इति नैकट्यात् गोविंदे कृष्णे लोले लोचने यस्याः सलज्जत्वात् । पुनः कीदृशी मनोहरशब्दयुक्तं मंजीरं नूपुरं सिंजाना गमनवशात् सशब्दं कुर्वती क्वचित्ससाध्वससानंदगोविंदे इतिपाठः । तदा ससाध्वसः पूर्वापराधात् सानंदः राधायाः आगमनात् । एवं नागरयोः समागमे रसोत्पत्तिरुक्ता ॥ २ ॥

भा० टी०—इससे अनंतर श्रीकृष्णविषे चंचलनेत्रोंवाली मनोहर मंजीर ( बिछुवन ) को बजातीहुई वह राधा भयपूर्वक और आनंदपूर्वक लतागृहमें ( कुंजमें ) प्रवेश करती भई ॥ २ ॥

अथ द्वाविंशः प्रबंधो वराडिरागेण रूपकताले गीयते.

अब बाईसवां प्रबंध वराड़ी रागकरके रूपकतालमें गाया जाताहै.

लीलागृहप्रवेशं निरूप्येदानीं दर्शनमहोत्सवेन रसविक्रिया गीतेनाह—

राधावदनविलोकनविकसितविविधविकारविभंगम् ॥
जलनिधिमिव विधुमंडलदर्शनतरलिततुंगतरंगम् ॥ १ ॥
हरिमेकरसं चिरमभिलषितविलासम् ॥
सा ददर्श गुरुहर्षवशंवदवदनमनंगनिवासम् ॥ ध्रु० ॥

सं० टी०—वराडीरागः । रूपकतालः । सा राधा एवंभूतं हरिं ददर्श सप्तपद्यां सर्वाणि हरिविशेषणानि । कीदृशं हरिं राधावदनविलोकनेन विकसितः प्रकाशितो विविधो नानाप्रकारो विकारविभंगः कटाक्षादिरचना येन तं । पुनः कीदृशं जलनिधिं समुद्रमिव स्थितं । कीदृशं जलनिधिं विधुमंडलदर्शनेन चं-

द्रमंडलालोकेन तरलिताश्चंचलीकृताः तरंगाः कल्लोला यस्य तं । पुनः कीदृशं एकरसं एकस्यां राधायामेव रसः प्रीतिर्यस्य तं । पुनः कीदृशं चिरं बहुकालं अभिलषितः प्रार्थितः विलासः केलिर्येन तं । पुनः कीदृशं गुरुहर्षस्यातिशयस्य हर्षस्य वशंवदं आधीनं वदनं मुखं यस्य सानंदमुखमित्यर्थः । पुनः कीदृशं अनंगस्य कामस्य निवासं स्थानभूतं कंदर्पकोटिलावण्यमित्यर्थः । अत्रागाधशृंगाररसाश्रयत्वेन कृष्णस्य जलनिधिसाम्यं राधामुखस्याल्हादकारित्वादिना चंद्रसाम्यं बोध्यम् । उपमालंकारश्च ॥ १ ॥

भा० टी०–वह राधा राधाके मुख देखनेसे अनेकप्रकारके कटाक्ष आदि भावोंको करतेहुए, चंद्रमंडलके दर्शनसे चंचल ऊंचे उठेहुए तरंगोंवाले, समुद्रकी तरह स्थितहुए, एकही राधामें प्रीतिवाले, बहुतकालसे क्रीड़ाकी अभिलाषा करनेवाले, बहुतसे हर्षके आधीन मुखवाले, कामके निवासस्थान, ऐसे श्रीकृष्णको देखतीभई ॥ १ ॥

हारममलतरतारमुरसि दधतं परिलंबितदूरम् ॥
स्फुटतरफेनकदंबकरंबितमिव यमुनाजलपूरम् ॥ २ ॥

सं० टी०–हारमिति । पुनः कीदृशं हारं मुक्ताहारं दधतं धारयंतं उरसि हृदये कीदृशं हारं अमलतरतारं अत्यन्तविशुद्धबृहत्तरं । पुनः कीदृशं स्फुटतरो यः फेनकदम्बस्तेन करंबितं मिश्रितं यमुनाजलपूरमिव श्रीकृष्णस्य श्यामत्वाद्यमुनाप्रवाहसाम्यं हारस्य शुभ्रत्वात् फेनसाम्यं बोध्यम् ॥ २ ॥

भा० टी०–अत्यंत कांतिवाला, दूरतक लंबायमान हारको छातीमें धारण करतेहुए कैसेकि प्रकट होतेहुए फेनके बुदबुद समूहसे मिश्रित, यमुनाजलका पूर ( प्रवाह ) के समान है ॥ २ ॥

श्यामलमृदुलकलेवरमंडनमधिगतगौरदुकूलम् ॥
नीलनलिनमिव पीतपरागपटलभरवलयितमूलम् ॥ ३ ॥

सं० टी०–श्यामलेति । श्यामलं कृष्णं मृदुलं कोमलं कलेवरमंडनं शरीरालंकारो यस्य तं । पुनः कीदृशं अधिगतं परिहितं गौरदुकूलं पीतवस्त्रं येन । कमिव नीलोत्पलमिवेत्यर्थः । कीदृशं नीलनलिनं पीतपरागाणां कुंकुमरेणूनां

पटलस्य समूहस्य भरः अतिशयस्तेन वलयितं वेष्टितं मूलं यस्य तत्तथा ॥ ३ ॥

भा० टी०-और श्यामवर्ण, कोमल शरीररूपी अलंकारवाले, तथा पीतांबर धारण करनेवाले ( श्रीकृष्णको देखतीभई ) ( कैसेकि ) पीतपुष्परज समूहके भारसे लिपटेहुए मूलवाला, नीला कमलपुष्पके समान ( शोभित हो रहाहै ) ॥ ३ ॥

तरलदृगंचलचलनमनोहरवदनजनितरतिरागम् ॥
स्फुटकमलोदरखेलितखंजनयुगमिव शरदि तडागम् ॥ ४ ॥

सं० टी०-तालेति । कीदृशं हरिं तरलश्चंचलो यः कटाक्षस्तस्य चलनेन मनोहरं सुंदरं यद्वदनं तेन जनितउत्पादितो रसो रागोऽभिलाषोऽर्थात् नारीणां येन नारीणामपि कामकरमिति भावः । कमिव शरदि शरत्काले तडागमिव । कीदृशं तडागं स्फुटकमलस्य विकासितपद्मस्योदरमध्ये खेलितं क्रीडितं खंजनयोर्युग्मं युगलं यत्र तथा शरत्काले खंजनवर्णनमुचितमेव ॥ ४ ॥

भा० टी०-चंचल कटाक्षोंके चलानेसे मनोहरहुए मुखसे रमणकी प्रीतिको उत्पन्न करतेहुए ( तिस श्रीकृष्णको ) प्रकाशित कमलोंके मध्यमें क्रीडा करतेहुए खंजन पक्षीके जोड़ासे युक्तहुए शरदऋतुमें तालावकी तरह ( शोभित भयेको ) ( देखतीभई ) ॥ ४ ॥

वदनकमलपरिशीलनमीलितमिहिरसमकुंडलशोभम् ॥
स्मितरुचिरुचिरसमुल्लसिताधरपल्लवकृतरतिलोभम् ॥ ५ ॥

सं० टी०-वदनेति । वदनकमलस्य परिशीलनाय मिलिते मिहिरसमे सूर्यतुल्ये ये कुंडले ताभ्यां शोभा यस्य तं । तथा पुनःकीदृशं स्मितरुचिरुचिरो हास्यदीप्तिसुभगः समुल्लसितो दीप्यमानो योऽधरपल्लवस्तेन कृतो रतौ लोभो युवतीनां रताभिलाषो येन तं तथा । त्वत्पक्षे त्वयि रतिलोभमित्यत्र गमकत्वात्समासः ॥ ५ ॥

भा० टी०-मुखकमलको प्रकाश करनेकेवास्ते लगायेहुए सूर्यके समान कुंडलोंको शोभावाले, हास्यकी रुचिसे शोभित ( दीप्त ) हुए अधरपल्लव ( अधरोष्ठ ) करके रमण समयका लोभ करनेवाले ( श्रीकृष्णको० ) ॥ ५ ॥

शशिकिरणच्छुरितोदरजलधरसुंदरकुसुमसुकेशम् ॥
तिमिरोदितविधुमंडलनिर्मलमलयजतिलकनिवेशम् ॥ ६ ॥

सं० टी०—शशिकिरणेति । कीदृशं हरिं । शशिकिरणेन चंद्रदीप्त्याच्छुरितं मंडितमुदरमभ्यंतरं यस्य जलधरस्य मेघस्य तद्वत्सुंदराः पुष्पसहिताः केशा यस्यतं । अत्र केशानां श्यामतया मेघसाम्यं तत्रस्थकुसुमानां च मेघांतश्चारिचंद्रकिरणसाम्यं बोध्यं । पुनः कीदृशं तिमिरेऽधकारे उत्थितो यो विधुमंडलश्चंद्रबिंबस्तद्वन्निर्मलं मलयजतिलकं चंदनबिंदुस्तस्य निवेशोवस्थानं यत्र तं शृंगारिणां नागराणां तिलकं वर्तुलमेवेति तस्य चंद्रसाम्यं चंद्रोदये तिमिरस्यासंभवादभूतोपमेयं बोध्या ॥ ६ ॥

भा० टी०—चंद्रमाकी किरणोंसे मंडित अभ्यंतर देशवाले मेघकी तुल्य शोभित, पुष्पसहित केशोंवाले और अंधकारमें उदयहुए चंद्रमंडलके समान प्रकाशित चंदनके तिलकवाले ( श्रीकृष्णको० ) ॥ ६ ॥

**विपुलपुलकभरदंतुरितं रतिकेलिकलाभिरधीरम् ॥**
**मणिगणकिरणसमूहसमुज्ज्वलभूषणसुभगशरीरम् ॥ ७ ॥**

सं० टी०—विपुलेति । कीदृशं हरिं विपुलोऽधिको यः पुलकभरो रोमांचातिशयस्तेन दंतुरितं निम्नोन्नतं व्याप्तमित्यर्थः । पुनः कीदृशं रतिकेलिकलाभिः सुरतक्रीडाकथाभिरधीरं चंचलं । पुनः कीदृशं मणिगणानां किरणसमूहेन समुज्ज्वलं दीप्यमानं यद्भूषणं तेन सुभगं सुंदरं शरीरं यस्य तं तथा ॥ ७ ॥

भा० टी०—बहुतसे रोमांचोंके समूहसे व्याप्त, रमणसमयकी क्रीडाओंकरके चंचलहुए और मणिगणोंकी किरणोंके समूहसे जो प्रकाशित हुए आभूषण तिनसे सुंदर शरीरवाले ( श्रीकृष्णको ) वह राधा देखतीभई ॥ ७ ॥

एवंभूतस्य कृष्णस्य दर्शनाद्राधायास्तदानीं किंजातमिति कविराह—

**श्रीजयदेवभणितविभावद्विगुणीकृतभूषणभारम् ॥**
**प्रणमत हृदि विनिधाय हरिं भवजलसुकृतोदयसारम् ॥ ८ ॥**

सं० टी०—श्रीजयदेवेति श्रीजयदेवस्य भणितविभावेन भाषितप्रपंचेन द्विगुणीकृतस्यालंकारस्य भारो यस्य तं हरिं हे कृष्णभक्ताः प्रणमत नमस्कुरुत किं

कृत्वा सुचिरं चिरकालं हृदि विनिधाय संस्थाप्य कथंभूतं हरिं सुकृतस्य य उदयस्तस्य सारं यद्वा सुकृतोदय एव सारो धनं यस्मात्तम् ॥ ८ ॥

भा० टी०-( हे भक्तजनों ! ) तुम श्रीजयदेवसे कहेहुए इस प्रपंचसे दूना किया गया है अलंकार ( आभूषण ) का भार जिनके ( ऐसे श्रीकृष्णको ) संसारसागरमें सुकृतके उदयका सारभूत, हरिभगवान्को हृदयमें स्थापित करके, प्रणाम करो ॥ ८ ॥

**श्लोकः ॥ अतिक्रम्यापांगं श्रवणपथपर्यंतगमनप्रयासेनेवाक्ष्णोस्तरलतरतारं पतितयोः ॥ इदानीं राधायाः प्रियतमसमालोकसमये पपात स्वेदांबुप्रसर इव हर्षाश्रुनिकरः॥ १ ॥**

सं०टी०-अतिक्रम्येति । इदानीं प्रियतमसमालोकसमये प्रवाहसदृशः राधायाः हर्षाश्रुनिकरः सात्विकभावेन नेत्रांबुपूरः पपात । तत्रोत्प्रेक्षते अपांगं नेत्रप्रांतं अतिक्रम्योल्लंघ्य श्रवणपथस्य कर्णमार्गस्य पर्यंते गमनं तेन यः प्रयासस्तेनेवाक्ष्णोः स्वेदांबुप्रसरोऽभूत् । कीदृशयोरक्ष्णोः तरलतरतारं चंचलाक्षकनीनिकं यथा स्यात्तथा पतितयोः अन्यस्यापि गमनेन श्रमो भवति तेन च पतति । तद्वत् ॥ १ ॥

भा० टी०-अब अत्यंत प्रिय ( श्रीकृष्ण ) के दर्शन समयमें राधाजीके आनन्दपूर्वक प्रेमाश्रु ( प्रेमके आंसू ) गिरते भये ( कैसेकि ) कटाक्षस्थानको उलंघिके, जब कानों की बराबरी करके देखने लगी तब उसही परिश्रमके तरह चंचल आंखोंके तारोंपर पैरे हुए नेत्रोंके पसीनोंका जलही मानों बहताहै ऐसे शोभितभई ॥ १ ॥

**श्लोकः ॥ भजंत्यास्तल्पांतं कृतकपटकंडूतिपिहितस्मिते याते गेहाद्बहिरवहितालीपरिजने॥ प्रियास्यं पश्यंत्याः स्मरशरवशाकूतसुभगं सलज्जाया लज्जा व्यगमदिव दूरं मृगदृशः ॥ २ ॥**

सं० टी०-भजंत्याइति । मृगदृशः मृगाक्ष्याः राधायाः लज्जापि दूरं व्यगमादिव गतेव । कीदृश्याः राधायाः अवहितः सावधानो य आलीपरिजनः सखीसेवकवर्गस्तस्मिन् गेहाद्बहिर्याते गते साति तल्पांतं शय्यापर्यंतं भजंत्याः प्राप्नुवत्याः । कीदृशे परिजने कृता कपटेन कर्णादेः कंडूतिः कंडूयनं तेन पिहितं

छादितं हास्यं येन । पुनः कीदृश्याः प्रियास्यं कृष्णमुखं पश्यंत्याः । कीदृशं प्रियास्यं स्मरशरवशं कामबाणाधीनं आकूतं सुरताभिप्रायस्तेन सुभगं मनोहरं कामविकारहावभावादिमनोहरमित्यर्थः । पुनः कीदृश्याः सलज्जायाः लज्जासहितायाः तस्याश्चेष्टां दृष्ट्वा वचनांतरेण अपृष्ट्वा बहिर्गमनात्सखीनां साम्यं सर्वाः सख्यो गता इति । कथमत्र स्थातव्यमिति लज्जापि गतेतिभावः ॥ २ ॥

भा० टी०—कपटपूर्वक कानआदिके खुजानेके मिषसे हास्यको बंद करतेहुए, सावधानहुए, सखी सुहेलियोंके गण; घरसे बाहिर चलेगये तब शय्यापर प्राप्तहुई और कामबाणके वशसे रतिके अभिप्रायसे मनोहर, प्रियके मुखको देखतीहुई लज्जासहितहुई मृगनयनी राधाकी लज्जाभी दूरही हो गई है ऐसा भासता है ॥ २ ॥

**श्लोकः ॥ जयश्रीविन्यस्तैर्महित इव मंदारकुसुमैः स्वयं सिंदूरेण द्विपरणमुदा मुद्रित इव ॥ भुजापीडक्रीडाहतकुवलयापीडकरिणः प्रकीर्णासृग्बिंदुर्जयति भुजदंडो मुरजितः ॥ ३ ॥**

**इति श्रीकविराज श्रीजयदेवकृते गीतगोविंदे महाकाव्ये सानंद गोविंदो नाम सटीक एकादशः सर्गः ॥ ११ ॥**

सं० टी०—जयेति । मुरजितः कृष्णस्य भुजदंडो दंडाकारबाहुर्जयति सर्वोत्कर्षेण वर्तते भक्तानां रक्षणार्थमितिशेषः दंडशब्देन आजानुबाहुत्वं द्योतितं । कीदृशो भुजदंडः प्रकीर्णाः सर्वत्र लग्नाः असृग्बिंदवो रक्तबिंदवो यस्मिन् अत एव कुवलयापीडसंग्रामसंतोषेण स्वयं सिंदूरेण मुद्रित इव चित्रित इव द्विपश्रेतिसिंदूरेण मुद्रितस्तर्हि मदीयो बाहुरपि सिंदूरमुद्रितो भवतु । पुनः कीदृश इव जयश्रिया जयलक्ष्म्या विन्यस्तैर्विक्षिप्तैः मंदारकुसुमैः पारिजातपुष्पैर्महित इव पूजितइव जयिनः शूरस्योपरि पुष्पवृष्टिरुचिता । कीदृशस्य मुरजितः भुजापीडस्य बाहुदंडस्य क्रीडया हतः कुवलयापीडनामा करी हस्ती येन । अनेन सामर्थ्यलक्षणो नायकगुण उक्तः । एवंभूते भुजदंडे गाढालिंगनादिना श्रीराधायाः निःशंकक्रीडनं सूचितामिति भावः अत्रोत्प्रेक्षालंकारः । सानंदो राधासमागमेन सौंदर्येति क्षेपकः ॥ ३ ॥

भा० टी०—अपनी भुजाओंकी क्रीड़ाकरके कुवलयापीड़ नामक हस्तीको मारनेवाले श्रीकृष्णके रक्तबिंदुओंसे युक्तहुए भुजदंड भक्तोंकी रक्षाके वास्ते सर्वोत्कर्षसे वर्तते हैं, ( कैसेकि मानों ) विजयकी श्रीसे विन्यस्त कियेहुए, पारिजात वृक्षके पुष्पोंकरके पूजितसा होरहाहै और हस्तीके रणमें आपही सिंदूर करके चिन्हित हुएके समान शोभित ॥ २ ॥

इतिश्रीगीतगोविंदस्यरसिकप्रियानाम भाषाटीकायांएकादशःसर्गः ॥ ११ ॥

## अथ द्वादशः सर्गः प्रारभ्यते ॥

### अब बारहवां सर्ग प्रारंभ होता है ॥

**श्लोकः ॥ गतवति सखीवृंदे मंदत्रपाभरनिर्भरस्मरशरवशाकूतस्फीतस्मितस्नपिताधराम् ॥ सरसमनसं दृष्ट्वा राधां मुहुर्नवपल्लवप्रसवशयने विक्षिप्ताक्षीमुवाच हरिः प्रियाम् ॥ १ ॥**

सं० टी०—गतवतीति । अथ हरिः कृष्णः प्रियां वल्लभां राधां सरसमनसं रसोऽनुरागस्तत्सहितं मनो यस्यास्तां दृष्ट्वा उवाच वक्ष्यमाणमितिशेषः । कस्मिन् सति सखीवृंदे सखीसमूहे गतवति सति । कीदृशीं राधां मंदोऽल्पो यस्त्रपाभरो लज्जाभरस्तेन निर्भरोऽतिशयितो यः स्मरशरस्तत्परवशास्तदायत्त आकूतोऽभिप्रायस्तेन स्फीतं प्रवृद्धं यत् स्मितमीषद्धसितं तेन स्नापितौ व्याप्तावधरौ यस्यास्तां । अथ मदक्रूर इति स्मरविशेषणं । पुनः कीदृशीं मुहुः पुनः पुनः नवपल्लवप्रसवशयने नवपल्लवपुष्पमये शयने विक्षिप्ताक्षीं निहितनयनां शय्यालोकनेन सुरतेच्छा ध्वन्यते । अस्मिन्सर्गे स्वाधीनभर्तृका नायिका वर्ण्यते “ यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुंचति । विचित्रविभ्रमासक्ता सा स्यात्स्वाधीनभर्तृका ” ॥ १ ॥

भा० टी०—इससे अनंतर, सखी सुहेलियां चलीगई तब मंद मंद लज्जाके भारसे अत्यंत प्राप्त हुए कामबाणके वशसे अभिप्राय पूर्वक बढ़ेहुए हास्यसे व्याप्तहुए, अधरोष्ठोंवाली और वारंवार नवीन पत्रोंकी पुष्पप्रधान शय्यापर दृष्टिको लगानेवाली राधाको अनुरागयुक्त मनवाली देखके; श्रीकृष्णचंद्र तिस प्रियाको कहते भये ॥ १ ॥

अथ त्रयोविंशतितमः प्रबंधो विभासरागेण एकतालीताले गीयते.

अब तेईसेवां प्रबंध विभासरागकरके एकताली तालमें गाया जाताहै.

**किसलयशयनतले कुरु कामिनि चरणनलिनविनिवेशम् ॥**
**तव पदपल्लववैरिपराभवमिदमनुभवतु सुवेशम् ॥ १ ॥**
**क्षणमधुना नारायणमनुगतमनुसर भो राधिके ॥ ध्रु० ॥**

सं० टी०—किसलयेति । विभासरागः । तल्लक्षणं । " स्वच्छन्दसंमानितपुष्पचापः प्रियाधरस्वादसुखातितृप्तः । पर्यंकमध्यास्य कृतोपवेशो भासो विपूर्वः किल हेमगौर" इति । हे राधे अधुना क्षणं अनुगतं अधीनं मां नारायणं अनुसर अनुगच्छ । अनुसरणप्रकारमाह, हे कामिनि हे कामुके त्वं किसलयैः रचितस्य शयनस्य शय्यायास्तले उपरिभागे चरणनलिनस्य बिनिवेशं पादपद्मसमर्पणं कुरु । इदं किसलयशयनं तव पदपल्लवेन वैरि तस्मात्पराभवंतिरस्कारं अनुभवतु प्राप्नोतु । तव पदपल्लवस्य कांतिहरणात् शत्रुमस्तके हि चरणो दीयते । कीदृशं इदं सुवेशमपि पत्ररचनादिनाऽलंकृतमपि ॥ १ ॥

भा० टी०—हे राधे ! अब क्षणकालतक आधीनहुए ( मुझ ) नारायणको प्राप्तहो हे कामिनी ! पत्तोंकी शय्यापर अपने, चरणकमलकोस्थापित करो; ( क्योंकि ) यह सुंदर वेषवालाभी पत्रपुष्पोंकी शय्याका स्थान, तुम्हारे पदपल्लवोंका वैरी है, ( इसलिये ) तिरस्कारको प्राप्तहो ॥ १ ॥

**करकमलेन करोमि चरणमहमागमितासि विदूरम् ॥**
**क्षणमुपकुरु शयनोपरि मामिव नूपुरमनुगतिशूरम् ॥ २ ॥**

सं० टी०—हे राधे अहं करकमलेन ते चरणं करोमि संवाहयामि धातूनामनेकार्थत्वात् । यतस्त्वं विदूरं आगमितासि मया आनीतासि । दूरागतस्य चरणसंवाहनमुचितं त्वं शयनोपरि क्षणं नूपुरं उपकुरु । कमिव अनुगतिशूरं तत्रानुसरणे शूरं मामिव यथा आलिंगनादिना मामुपकरोषि तथा नूपुरमपि शय्यातलमलंकुरु इति भावः ॥ २ ॥

भा० टी०–हे राधे ! मैं अपने हस्तकमलसे तुम्हारे चरण दाबताहूं क्योंकि तुम दूर देशसे आईहो और शय्यापर क्षणकालतक नूपुर बिछियनको, जैसे तेरी गतिके पीछे शूरवीरहुए मेरे कोरे आलिंगनादिकोंसे उपकार करती है तैसे उपकार करो ॥ २॥

**वदनसुधानिधिगलितममृतमिव रचय वचनमनुकूलम् ॥**
**विरहमिवापनयामि पयोधररोधकमुरसि दुकूलम् ॥ ३ ॥**

सं० टी०–वदनेति । त्वं अनुकूलं वचनं वाक्यं अमृतमिव रचय वद । कीदृशं वदनमेव सुधानिधिश्चन्द्रस्तस्माद्गलितमुत्पन्नं अनंतरं उरसि वक्षसि वर्तमानं दुकूलं पट्टवस्त्रं विरहमिव अपनयामि स्फोटयामीत्यर्थः । कीदृशं पयोधररोधकं स्तनाच्छादकं । विरहपक्षे स्तनाश्लेषप्रतिबन्धकम् ॥ ३ ॥

भा० टी०–हे राधे मुखरूपी चंद्रमासे झिराहुआ अमृतके समान अनुकूल वचनको कहो तुम्हारे हृदयपर प्राप्तहुए कुचाओंको आच्छादन करनेवाले रेसमीवस्त्रको अपने विरहके समान दूर करताहूं ॥ ३ ॥

कुटिलमवलोकयंतीमातिविह्वलःसन्नाह–

**प्रियपरिरंभणरभसवलितमिव पुलकितमन्यदुरापम् ॥**
**मदुरसि कुचकलशं विनिवेशय शोषय मनसिजतापम् ॥ ४ ॥**

सं० टी०–प्रियेति । हे राधे त्वं मदुरसि मम वक्षसि कुचकलशं विनिवेशय स्थापय स्तनकलशार्पणेन मनसिजतापं कामपीडां शोषय खण्डय । कीदृशं प्रियपरिरंभणाय ममालिंगनाय रभसेनोत्साहेन वलितमिव । संमुखमिव । पुनः कीदृशं पुलकितं संजातरोमांचं । पुनः कीदृशं अन्येनातिदुःखेन प्राप्यते इति-अन्यदुरापं सजलकुंभक्षेपेण तापशांतिर्युज्यत एव ॥ ४ ॥

भा० टी०–हे राधे ! तुम मुझसे मिलनेके वास्ते सन्मुख भये हुएके समान रोमांचितहुए, अन्योंको दुर्लभ कुचकलशोंको मेरी छातीपर स्थापित करो और मेरे कामका संताप दूर करो ॥ ४ ॥

त्वदेकजीवनं मां त्वमेव जीवयेत्याह–

**अधरसुधारसमुपनय भामिनि जीवयमृतमिव दासम् ॥**
**त्वयि विनिहितमनसं विरहानलदग्धवपुषमविलासम् ॥ ५ ॥**

सं० टी०—अधरेति । हे भामिनि कामकुशले त्वं अधरसुधारसं ओष्ठामृतरसं उपनय देहि अनेन दासं सेवकं मां मृतमिव जीवय । कीदृशं त्वयि विनिहितमनसं दत्तमानसं । पुनः कीदृशं विरहानलेन वियोगाग्निना दग्धं वपुः शरीरं यस्य अतएवाविलासं निश्चलं मृतस्तु निश्चलो भवति ॥ ५ ॥

भा० टी०—हे कामिनी ! अधरामृतको प्राप्तकरो तुम्हारेविषे चित्तलगाये, विरह अग्निसे दग्ध शरीरवाले चेष्टारहितहुए मुझको, मरे हुए दासकी तरह जिवावो ॥ ५ ॥

चाटुकेन प्रसन्नां प्रत्याह—

**शशिमुखि मुखरय मणिरसनागुणमनुगुणकंठनिनादम् ॥**
**मम श्रुतियुगले पिकरवविकले शमय चिरादवसादम् ॥ ६ ॥**

सं० टी०—शशीति । हे शशिमुखि चंद्रवदने त्वं मणिरसनागुणं मणियुक्तं कांचीदाम मुखरय शब्दितं कारय । कीदृशं अनुगुणः सदृशः कंठनिनादो यस्य कंठगीतनादसदृशमित्यर्थः तेन शब्देन त्वं मम श्रुतियुगले कर्णयुग्मे चिरात्तव विरहेण योऽवसादः खेदस्तं शमय नाशय । खेदकारणमाह कीदृशे श्रुतियुगले पिकरुतैः कोकिलाशब्दैर्विकले दुःखिते । विरहिणो हि पिकरुतं दुःसहं भवति ॥ ६ ॥

भा० टी०—हे चंद्रमुखी ! कंठके निनाद सरीखे शब्दवाली, मणिजड़ित तागड़ीको बजावो, कोकिलोंके शब्दसे विकलहुए मेरे दोनों कानोंमें जो बहुत कालसे तुम्हारे विरहका संताप है उसको शांत करो ॥ ६ ॥

किंचिदवलोकयंतीमाह—

**मामतिविफलरुषा विकलीकृतमवलोकितुमधुनेदम् ॥**
**मीलति लज्जितमिव नयनं तव विरम विसृज रतिखेदम् ॥ ७ ॥**

सं० टी०—हे राधे तवेदं नयनं नेत्रं अधुना मामवलोकितुं द्रष्टुं लज्जितमिव मीलति मीलनं धत्ते । कीदृशं मां अतिविफलरुषा अतिविफलकोपेन विकलीकृतं कर्णांतरं प्रापितं अतएव रोषाद्विरम विरक्ता भव । रतिखेदं क्रीडादैन्यं विसृज त्यज । कोपं त्यक्त्वा मया सह रमणं कुर्वित्यर्थः ॥ ७ ॥

भा० टी०—हे राधे! अब तुम्हारे यह नेत्र, अत्यंत विफल क्रोध करके बिकल कियेहुए मुझको देखनेके वास्ते लज्जित हुएसे मींचते हैं तुम शांतहो क्रीडाकी दीनताको दूर करो॥७॥

श्रीजयदेवकवेरिदमनुपदनिगदितमधुरिपुमोदम् ॥
जनयतु रसिकजनेषु मनोरमरतिरसभावविनोदम् ॥ ८ ॥
इति श्रीगीतगोविंदे त्रयोविंशतितमःप्रबंधः ॥ २३ ॥

सं० टी०—श्रीति। श्रीजयदेवेन भणितमिदं गीतं रसिकजनेषु श्रृंगाररसिकलोकेषु मनोरमं मनःप्रीतिकरं रतिः संभोगः रसः श्रृंगाररसः भावाः संचारिणसात्विकादयो ये तेषां विनोदं कौतुकं जनयतु उत्पादयतु। कीदृशमिदं अनुपदं पदेपदे निगदितो उक्तो मधुरिपोः कृष्णस्य मोदो हर्षो यत्र गीते ॥ ८ ॥

भा० टी०—श्रीजयदेव कविसे कहाहुआ यह पद पदमें वर्णित कियाहै श्रीकृष्णका आनंद जिसमें ऐसा गीत रसिकजनोंविषे मनकी प्रीति, रमणका रस सात्त्विक आदिभाव, इनको उत्पन्न करो ॥ ८ ॥

इतिश्रीगीतगोविंदस्यरसिकप्रियानाम भाषाटीकायां त्रयोविंशतितमः प्रबंधः ॥ २३ ॥

इदानीं सुरतारंभं निरूपयति—

श्लोकः ॥ प्रत्यूहः पुलकांकुरेण निबिडाश्लेषे निमेषेण
च क्रीडाकूतविलोकितेऽधरसुधापाने कथाकेलिभिः ॥
आनंदाधिगमेन मन्मथकलायुद्धेपि यस्मिन्नभूदुद्भूतः
स तयोर्बभूव सुरतारंभः प्रियंभावुकः ॥ १ ॥

सं० टी०—प्रत्यूह इति । तयोः राधाकृष्णयोः सुरतारंभः प्रियंभावुकः प्रियं भवितुं शीलं यस्य सः उद्भूतः प्रकटो बभूव । स कः यास्मिन्सुरतारंभे निबिडाश्लेषे गाढालिंगने कर्तव्ये पुलकांकुरेण रोमोद्गमेन प्रत्यूहः विघ्नोभूत् । व्यवधानकर्तृत्वाद्रोमोद्गमस्य यस्मिन्सुरतारंभे क्रीडाकूतविलोकिते क्रिडासु अभिप्रायपूर्वकं यद्विलोकितं तस्मिन् कर्तव्ये निमेषेण पक्ष्मचलनेन प्रत्यूहोऽभूत् । यस्मिन्नधरसुधापाने ओष्ठामृतपाने कर्तव्ये कथाकेलिभिः प्रत्यूहोऽभूत् । अपिः

समुच्चयये । यस्मिन्मन्मथकलायुद्धे कामकलान्वितसुरतसंग्रामे कर्तव्ये आनंदाधिगमेन आनंदप्राप्त्या प्रत्यूहोऽभूत् प्रीत्या आनंदप्राप्तिः ॥ १ ॥

भा० टी०-तिनै राधाकृष्णका वेह, मैथुनारंभ प्यारको उत्पन्न करनेवाला प्रकट होता भया कि जिसमें दृढ आलिंगन करनेमें रोमावलियोंसेही विघ्न भया और क्रीडाके अभिप्रायपूर्वक देखनेमें पलकझिपकनेसे अधरामृत पानमें वार्त्तालापसे कामयुद्धमें भी आनंदकी प्राप्तिसेही विघ्न भया ॥ १ ॥

तदेव विपरीताख्यं उक्तिवैचित्र्येण कथयति-

> श्लोकः ॥ दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजैराविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः
> हस्तेनानमितः कचेऽधरमधुस्यंदेन संमोहितः कांतः कामपि तृप्तिमाप तदहो कामस्य वामा गतिः ॥ २ ॥

सं० टी०-दोर्भ्यामिति । कांतः कृष्णः कामपि अनिर्वचनीयां तृप्तिं संतोषमाप प्रापत् । कीदृशः कृष्णः दोर्भ्यां हस्ताभ्यां संयमितः बद्धः अर्थान्नायिकायाः । पुनः कीदृशः पयोधरभरेण स्तनभरेण पीडितः पाणिजैर्नखैराविद्धः खंडितः दशनैर्दंतैः क्षतमधरपुटं यस्य सः पुनः कीदृशः श्रोणीतटेन कटिप्रदेशेनाहतस्ताडितः कचे केशबंधे हस्तेन आनमितः नम्रीकृतः । पुनः कीदृशः अधरमधुस्यंदेन अधरामृतरसेन संमोहितः । यत्क्रोधजनकं तदेवातिसंतोषकारकमतएव कामस्य मदनस्य वामा विपरीतैव गतिरित्यर्थः ॥ २ ॥

तदेव पुनः कथयति-

भा० टी०-भुजाओंसे बांधाहुआ कुचाओंके भारसे आपीडित हुआ, नखोंसे विंधाहुआ, दांतोसे कटेहुए ओष्ठवालाहुआ, कटिप्रदेशसे आहतहुआ, हाथसे केशबंधमें नवायाहुआ, अधरामृतसे मोहितहुआ ऐसाभी श्रीकृष्ण कोईक विलक्षण तृप्तिको प्राप्तभयाहै अहो सो यह कामदेवकी बडी उलटी गतिहै ॥ २ ॥

> श्लोकः ॥ मारांके रतिकेलिसंकुलरणारंभे तया साहसप्रायं कांतजयाय किंचिदुपरि प्रारंभि यत्संभ्रमात ॥ निष्पं-

दा जंघनस्थली शिथिलिता दोर्वल्लिरुत्कंपितं वक्षो
मीलितमक्षि पौरुषरसः स्त्रीणां कुतः सिद्ध्यति ॥ ३ ॥

सं० टी०—मारांके इति । मारांके मारांकसंज्ञके रतिकेलिसंकुलरणारंभे सुरतक्रीडातुमुलयुद्धारंभे तया राधया यत्संभ्रमात् कांतजयाय कृष्णजयार्थं साहसप्रायं किंचिदुपरि विपरीतरतं प्रारंभि आरब्धं तदैव जघनस्थली निष्पंदा तदा स्तब्धा जाता दोर्वल्लिर्भुजलता शिथिला जाता वक्षस्थलमपि कंपयुक्तमभूत् । तथा अक्षि नेत्रयुग्मं मीलितमभूत् । अतएव स्त्रीभिरतिसाहसात्प्रारब्धमपि पौरुषं कुतः सिद्ध्येन्नैव सिद्ध्यतीत्यर्थः ॥ ३ ॥

भा० टी०—कामसंज्ञक, रमणरूपी क्रीड़ासे संकुल युद्ध प्रारंभ भया तब तिस राधानें, जो संभ्रमसे साहसपूर्वक श्रीकृष्णको जीतनेकेवास्ते कछुक ऊपर प्रारंभ किया विपरीत रमण किया, उसी समय जंघाओंकी चंचलता नहीं रही और भुजा शिथिल होगई, छाती कंपने लगगई आंख मिचगई इसलिये, रमण समयमें स्त्रियोंके पुरुषार्थका रस कहांसे सिद्ध होता है ॥ ३ ॥

श्लोकः ॥ तस्याः पाटलपाणिजांकितमुरो निद्राकषाये
दृशौ निर्धूताधरशोणिमा विलुलितस्रस्तस्रजो मूर्द्धजाः ॥
कांचीदाम दरं श्लथां चलमिति प्रातर्निखातैर्दृशोरे-
भिः कामशरैस्तदद्भुतमहो पत्युर्मनः कीलितम् ॥ ४ ॥

सं० टी०—तस्याइति । एभिः पूर्वोक्तैः कामशरैर्यत्पत्युः स्वामिनो मनः कीलितं विद्धं इति एतदद्भुतमाश्चर्यमभूत् । कथंभूतैः कामशरैः प्रातःकाले दृशोर्नेत्रयोर्निखातैरारोपितैः । इतीति किंतस्या राधायाः उरः पाटलपाणिजैः श्वेतरक्तनखैश्चिह्नितं ।तस्या निद्राकषाये निद्रालोहिते दृशौ नेत्रे । तस्या निर्धूतः क्षालितः अधरशोणिमा अधरलौहित्यं । तस्या विलुलिताः स्रस्ताः शिथिलिताः स्रजोमाला येभ्यस्ते मूर्द्धजाः केशाः दरं ईषत् श्लथं शिथिलं अंचलं वस्त्रं यस्य तादृशं कांची दाम मेखलागुणः कामशरैः नखक्षतजागरचुंबनकेशाकर्षणनीवीमोचनानि पंचशराः निरूपिताः । अन्यत्र निखातैर्बाणैरन्यत्कीलितमित्याश्चर्यमित्यर्थः ॥ ४ ॥

भा० टी०–तिसे राधाकी छाती श्वेत और लालरंगवाले नखोंकरके चिन्हित होरही है, नेत्र निंद्रासे गदमले लाल होरहे हैं,ओष्ठोंकी लाली दूर हो रही है,केश मुड़ रहे हैं ढीले होरहे हैं तथा केशोंके पुष्प खिड रहे हैं और तागड़ीकी लरीके पासका वस्त्र कछुक शिथिल होरहाहै, इसै प्रकारसे प्रांतःकालमें नेत्रोंके आरोपण करनेसे इन नखोंके चभोंटे १ उजागरा २ चूंबना ३ केश खींचना ४ नीवीखोलने ५ रूप पांच कामबाणोंकरके अपने पतिका मन की लै दिया वींधदिया अहो यह बड़ा आश्चर्य है; क्योंकि, अपने शरीरपर प्राप्त भये बाणोंसे दूसरेका मन वींधा ॥ ४ ॥

श्लोकः ॥ त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे
शंके सुंदरि कालकूटमपिबन्मूढो मृडानीपतिः ॥ इत्थं
पूर्वकथाभिरन्यमनसो विक्षिप्य वामांचलं राधायाः
स्तनकोरकोपरिलसन्नेत्रो हरिः पातु वः ॥ ५ ॥

सं० टी०–त्वामप्राप्येति । हरिः कृष्णः वः युष्मान् पातु । कीदृशो हरिः राधायाः स्तनौ कोमलत्वापतितत्वादिना गुणेन कोरकाविव तयोरुपरि लसती संबद्धे नेत्रे यस्य । किं कृत्वा वामांचलं हृदयवामदेशलग्नांचलं विक्षिप्य दूरीकृत्य । कीदृश्याः राधायाः इत्थं इति पूर्वकथाभिः अन्यमनसः कथादत्तचित्ताया इत्यर्थः । कथामेवाह हे सुंदरि क्षीरोदतीरोदरे क्षीरसमुद्रतीरमध्ये मृडानीपतिर्महादेवस्त्वामप्राप्य कालकूटविषमपिबदित्यहं शंके तर्कयामि । यतः मूढः ज्ञानरहितः । कीदृशीं त्वां मयि मन्निमित्तं निमित्ते सप्तमी । स्वयंवरपरां मदेकपतिकामामित्यर्थः । इत्थं पूर्वं कथा । अनेन गौरीपतित्वेपि तवालाभाद्विषमपिबत् इति गौर्या अपि अधिकगुणेतिभावः ॥ ५ ॥

भा० टी०–श्रीकृष्ण राधासे कहने लगे, कि हे सुंदरी ! मैं ऐसी शंका करताहूं कि मेरे निमित्त क्षीरसागरके तटमें आपही वरनेमें तत्पर हुई तुमको नहीं प्राप्त होके मूढ़ शिवजी कालकूट विषको पीतेभये, ऐसी ऐसी पूर्वकथाओंसे अन्य जगह ( पूर्वकथामें ) मनवाली राधाके उत्तरीय वस्त्रको दूर करके तिसके कुचरूपी कलियोंपर लगेहुए नेत्रोंवाले श्रीकृष्ण तुम्हारी ( भक्तजनोंकी ) रक्षा करो ॥ ५ ॥

श्लोकः ॥ व्यालोलः केशपाशस्तरलितमलकैः स्वेदलोलौ कपोलौ स्पष्टा दष्टाधरश्रीः कुचकलशरुचा हारिता हारयष्टिः ॥ कांची कांचिद्गताशां स्तनजघनपदं पाणिनाच्छाद्य सद्यः पश्यंती चात्मरूपं तदपि विलुलितस्रग्धरेयं धिनोति ॥ ६ ॥

सं० टी०—व्यालोल इति । इयं राधा तदपि तथापि धिनोति प्रीणयति अर्थात्कृष्णं । कीदृशी राधा पाणिना हस्तेन जघनयोः पदं आभोगं सद्यः आच्छाद्य आत्मरूपं पश्यंती विलुलिता म्लानां स्रजं धारयतीति । आत्मरूपमेवाह । केशपाशो व्यालोलः इतस्ततो विक्षिप्तोऽभूत् । अलकैश्चूर्णकुंतलैस्तरलितं स्थानाच्चलितम् । कपोलौ स्वेदेन घर्मजलेन लोलौ व्याप्तौ । दष्टाधरश्रीः खंडिताधरलक्ष्मीः स्पष्टा व्यक्ता । कुचकलशरुचा स्तनघटदीप्त्या हारयष्टिः मुक्ताकलापः हारिता दूरीकृता । कांची रशना कांचिदाशां दिशं गता चलिता । यद्यपीति सर्वत्र योजनीयं । स्रग्धरानामकं छंदश्चेदम् ॥ ६ ॥

भा० टी०—केशबंध खिंडगये, अलक चंचल होगये, कपोल पसीनायुक्त ( और ) क्षतहुए ओष्ठोंकी शोभा दीखरही, कुचकलशोंकी दीप्तिकरके हारकी शोभा दूर होरही, तागड़ी किसीक दिशामें चलित होरही. ऐसे समयमें शीघ्रही ( अपनें ) हाथसे कुचा और आभोगस्थानको ढांकके और अपने स्वरूपको देखती हुई, शिथिल पुष्पोंकी माला धारण करनेवाली यह राधा तिसै श्रीकृष्णको तृप्त करती है ॥ ६ ॥

श्लोकः ॥ ईषन्मीलितदृष्टिमुग्धहसितं सीत्कारधारावशादव्यक्ताकुलकेलिकाकुविकसद्दंतांशुधौताधरम् ॥ श्वासोत्कंपिपयोधरोपरिपरिष्वंगात्कुरंगीदृशो हर्षोत्कर्षविमुक्तनिःसहतनोर्धन्यो धयत्याननम् ॥ ७ ॥

सं० टी०—ईषदिति । कुरंगीदृशो हरिणनयनायाः आननं मुखं धन्यो भाग्यवान् जनो धयति पिबति । कीदृश्याः कुरंगीदृशः श्वासेन कामजनितेन खरपवनेन उत्कंपितौ किंचिच्चलितौ पयोधरौ स्तनौ तयोरुपरि परिष्वंगादालिंगना-

त् यः हर्षोत्कर्षः हर्षाधिक्यं तेन विमुक्ता त्यक्ता सालसा अतएव निःसहा कार्याक्षमा तनुः शरीरं यस्याः परिष्वंगं कृत्वा धन्यो धयति पिबतीति भावः । कीदृशमाननं ईषन्मीलितदृष्टि मुकुलितनयनं मुग्धं सुंदरं हसितं हास्यं यस्मिन् पुनः कीदृशं सीत्कारधारावशात् कामविकारपरंपरावशात् अव्यक्ता आकुला या केलिस्तस्यां यः काकुः शोकमित्यादिभिः ध्वनिविशेषस्तेन विकसंतः प्रकटीभवंतो ये दंता दशनास्तेषामंशुभिः किरणैर्धौतः क्षालितः अधरो यस्मिन् ॥ ७ ॥

भा० टी०–धन्य जन, कामजनित श्वाससे हिलतेहुए कुचाओंके ऊपर आलिंगन करनेसे अर्थात् स्पर्श करनेसे अत्यंत हर्ष होनेसे आलस्ययुक्त शरीरवाली; मृगसरीखे नेत्रोंवालीके कैछुक मीलित नेत्रयुक्त मनोहर हास्यवाला और सीत्कार शब्दकी धाराके वशसे आकुल क्रीड़ाके काकुशब्द ( ना ना ना ) कथनसे प्रकट होतेहुए दांतोंकी किरणोंकरके धोया गया, ऐसा ओष्ठ जहां है ऐसे मुँखका पान करताहै ॥ ७ ॥

**श्लोकः ॥ अथ सा निर्गताबाधा राधा स्वाधीनभर्तृका ॥**
**निजगाद रतिक्लांतं कांतं मंडनवांछया ॥ ८ ॥ इति च**
**सहसा प्रीतं सुरतांते मानितातिखिन्नांगी ॥ राधा**
**जगाद सादरमिदमानंदेन गोविंदम् ॥ ९ ॥**

सं० टी०–अथेति । अथानंतरं राधा सुरतांते आनंदेन गोविंदं कृष्णमिदं वक्ष्यमाणं सादरं निजगाद । कीदृशी सहसा ईषद्धास्ययुक्ता निर्गता आसमंताद्भावेन बाधा कामपीडा यस्याः सा सुखेनाधीनः भर्ता प्रियो यस्याः सा । किमर्थं निजगादेत्यत आह मण्डनवांछया प्रियकर्तृकालंकरणवांछयेत्यर्थः । तस्याः स्वाधीनभर्तृकायाः लक्षणं भरतशास्त्रे उक्तं । " क्षणं कराहतेनैव क्षणं चरणपातिते । कन्दुकेनेव कांतेन क्रीडेत्स्वाधीनभर्तृका " । कथंभूतं कृष्णं कांतं प्रियं कमनीयं सुन्दरम् । पुनः कीदृशं रतौ सुरते क्लांतं परिश्रांतम् ॥ ८ ॥

भा० टी०–इससे अनंतर बाधारहित हुई, पतिको स्वाधीन करनेवाली वह राधा अपना शृंगार करनेकी इच्छाकरके, रमणमें श्रांतहुए प्रियपतिको कहेती भई ॥ ८ ॥ और इसे आगे कहने योग्य वक्ष्यमाणको, मान्य और अत्यंत खिन्न अंगवाली ( वह ) राधा सहसा आनंदकरके रमणके अंतमें प्रसन्न हुए गोविंदको आदरपूर्वक यह कहती भई ॥ ९ ॥

अथ चतुर्विंशतितमः प्रबंधो रामकरीरागेण यतिताले गीयते

अब चौवीसवां प्रबंध रामकरी रागकरके यतितालमें गायाजाताहै-

यद्राधा निजगाद तदेव गीतेनाह-

**कुरु यदुनंदन चंदनशिशिरतरेण करेण पयोधरे ॥**
**मृगमदपत्रकमत्र मनोभवमंगलकलशसहोदरे ॥ १ ॥**
**निजगाद सा यदुनंदने ॥ क्रीडति हृदयानंदने ॥ ध्रु ॥**

सं० टी०-कुर्विति । रामकरीरागः हृदयानन्दने चित्तहर्षके यदुनन्दने कृष्णे क्रीडति सति सा राधा निजगाद उक्तवती । किं निजगादेत्यत आह हे यदुनन्दन कृष्ण त्वं मम अत्रास्मिन्पयोधरे करेण स्वहस्तेन मृगमदपत्रकं कस्तूरिकापत्रावलीं कुरु । कीदृशेन करेण चन्दनवच्छिशिरेण अतिशीतलेन । कीदृशे पयोधरे मनोभवस्य कामस्य मंगलाय कलशः पूर्णकुम्भस्तस्य सहोदरे तुल्ये मंगलं हिरण्यमिति वा ॥ १ ॥

भा० टी०-हृदयको आनंद करनेवाले यदुनंदन श्रीकृष्णक क्रीडा करचुके तब वह ( राधा ) कहतीभई कि हे यदुनंदन ! तुम कामदेवके मंगलरूप कलशोंके समान इन कुंचकलशोंपर चंदनसेभी शीतल ( अपने ) हाथकरके कस्तूरीकी पत्रावली बनावो ॥ १ ॥

**अलिकुलगंजनसंजनकं रतिनायकसायकमोचने ॥**
**त्वदधरचुंबनलंबितकज्जलमुज्ज्वलय प्रिय लोचने ॥ २ ॥**

सं० टी०-अलीति । हे प्रिय कृष्ण त्वं लोचने मदीये नेत्रे त्वदधराभ्यां चुम्बनेन लम्बितं गलितं कज्जलं उज्ज्वलय पुनरुद्दीपय । कीदृशं कज्जलं अलिकुलस्य भ्रमरसंघस्य गंजनमभिभवं संजनयतीति संजनकं विधायकम् । कीदृशे लोचने रतिनायकस्य कामस्य सायकान् मोचयति तस्मिन् नयनकटाक्षप्रत्यंचिकमासाद्य कामो बाणान् मोचयतीति भावः । एतत्प्रेरणाय कामबाणं मुंचतीत्यर्थः ॥ २ ॥

भा० टी०-हे प्रिय ! कामबाणको छोड़नेवाले मेरे नेत्रोंमें भ्रमरोंके कुलका तिरस्कार करनेवाला तुम्हारे अधरोष्ठ चुंबनसे गलितहुए कज्ज्वलको उज्वल करो ॥ २ ॥

**नयनकुरंगतरंगविलासनिरोधकरे श्रुतिमंडले ॥**
**मनसिजपाशविलासधरे शुभवेष निवेशय कुंडले ॥ ३ ॥**

सं० टी०—नयनेति । हे शुभवेष रुचिरालंकार कृष्ण त्वं मम श्रुतिमण्डले कर्णप्रदेशे कुण्डले निवेशय कुण्डलयुग्मं स्थापय । कीदृशे श्रुतिमण्डले नयने एव कुरंगो मृगस्तस्य तरंगविलासस्य उत्फालगमनस्य निरोधं निषेधं करोतीति तथा । पुनः कीदृशे मनसिजस्य कामस्य यः पाशस्तस्य विलासं सादृश्यं लीलां धारयतीति पाशः पशुगमनानिरोधको भवतीति ॥ ३ ॥

भा० टी०—हे सुंदर वेषवाले ! ( श्रीकृष्ण ) कामकी फांशीकी लीलाको धारण करनेवाले और नेत्ररूपी मृगके तरंगविलासको रोकनेवाले कानोंमें कुंडलोंको पहिनावो ॥ ३ ॥

**भ्रमरचयं रचयंतमुपरि रुचिरं सुचिरं मम सन्मुखे ॥**
**जितकमले विमले परिकर्मय नर्मजनकमलकं मुखे ॥ ४ ॥**

सं० टी०—भ्रमरेति । हे कृष्ण मम सन्मुखे सुन्दरमुखे अलकं केशपाशं परिकर्मय प्रसाधय मण्डयेत्यर्थः । कीदृशमलकं उपरि मुखोपरि सुचिरं बहुकालं व्याप्य रुचिरं भ्रमरसमूहं रचयंतं कारयंतं स्वजातीयबुद्ध्या भ्रमरस्तत्र पततीति भावः । यद्वा मुखं कमलस्थानीयं कमले भ्रमरास्तिष्ठंति तद्वत् । कीदृशे मुखे जितं कमलं येन तादृशे विमले निर्मले । कीदृशमलकं नर्मजनकं क्रीडाकारकम् ॥ ४ ॥

भा० टी०—हे प्रिय ! लक्ष्मीके मुखको जीतनेवाले, निर्मले मेरे उत्तम मुखपर जोकि बहुत कालतक मुखपर सुंदर भ्रमर समूहको करै ऐसा, मुखपर क्रीडोंको उत्पन्न करनेवाला अलकपाटीको रचो ॥ ४ ॥

**मृगमदरसवलितं ललितं कुरु तिलकमलिकरजनीकरे ॥**
**विहितकलंककलं कमलानन विश्रमितश्रमसीकरे ॥ ५ ॥**

सं० टी०—मृगमदेति । हे कमलनयन कृष्ण त्वं अलिकरजनीकरे ललाटचन्द्रे तिलकं कुरु । कीदृशं मृगमदरसेन वलितं निर्मितं अतएव ललितं मनोहरं । पुन कीदृशं विहिता कृता कलंकस्यांकस्य कला षोडशभागो यत्र ।

अथवा कला शोभा यत्र । द्वितीयाचन्द्रप्रायं तिलकं कुर्वित्यर्थः । कथंभूतेऽलिकरजनीकरे विश्रमिताः श्रमसीकराः उपशांताः प्रयासजलकणा यत्र । एतेन चंद्रोपि प्रकटलांछनछविर्दृश्यत इति ॥ ५ ॥

भा० टी०–हे कमलानन ! श्रमके स्वेदबिंदुओंसे रहितहुए ( मेरे ) मस्तकरूप चंद्रमाविषे कलारहित, द्वितीयाके चंद्रमासरीखे कस्तूरीसे रचेहुए मनोहर तिलकको रचो ५॥

**मम रुचिरे चिकुरे कुरु मानद मनसिजध्वजचामरे ॥**
**रतिगलिते ललिते कुसुमानि शिखंडिशिखंडकडामरे ॥ ६ ॥**

सं० टी०–ममेति । हे मानद मानखण्डन मानदायक वा मम रुचिरे सुन्दरे चिकुरे । जात्येकवचनं । कुसुमानि पुष्पाणि कुरु रचयेत्यर्थः । कीदृशे चिकुरे मनसिजस्य कामस्य ध्वजचामरतुल्ये । पुनः कीदृशे ललिते रतिगलिते सुरतसमये मुक्तबंधने । पुनः कीदृशे ललिते शृंगारचेष्टया युक्ते । पुनः कीदृशे शिखंडिनो मयूरस्य शिखंडकस्येव पिच्छस्येव डामरे आटोपे यस्य आडंबरमित्यर्थः ॥ ६ ॥

भा० टी०–हे मानद ! मानको देनेवाले ! अथवा मानको खंडन करनेवाले ! कामके ध्वजा और चंवरकी तुल्य, रमणसमयमें शिथिलहुए, मनोहर मयूरके चंदा, पंखोंसरीखे आडंबरवाले, रुचिर, ऐसे मेरे वालोंमें पुष्पोंको करो अर्थात् गूंथो ॥ ६ ॥

**सरसघने जघने मम शंबरदारणवारणकंदरे ॥**
**मणिरशनावसनाभरणानि शुभाशय वासय सुंदरे ॥ ७ ॥**

सं० टी०–सरसेति । हे शुभाशय महोदाराचित्त त्वं मम सुंदरे जघने मणिरशना मणियुक्तघंटिकावसनानि वस्त्राणि आभरणानि अलंकरणानि वासय परिधानं कारय । कीदृशे जघने सरसः कामजनकः घनो निबिडश्च पश्चात्कर्मधारयः । पुनः कीदृशे शंबरदारणः कामः स एव वारणः कुंजरस्तस्य कंदरे वासस्थाने ॥ ७ ॥

भा० टी०–हे अत्यंत उदार चित्तवाले ! श्रीकृष्ण ! मेरे सुंदर कामजनक घन कठोर और कामरूपी हस्तीके रहनेका स्थानरूप जघनस्थलपर मणिजडित तागडीके घूंघरुवोंसे युक्त वस्त्रोंको सजावो सुंदर प्रकारसे रचो ॥ ७ ॥

श्रीजयदेववचसि शुभदे हृदयं सदयं कुरु मंडने ॥
हरिचरणस्मरणामृतनिर्मितकलिकलुषज्वरखंडने ॥ ८ ॥

इति श्रीगीतगोविंदे चतुर्विंशतितमः प्रबंधः ॥ २४ ॥

सं॰ टी॰—श्रीजयदेवेति। हे भक्तजन त्वं मण्डने अलंकारभूते शुभदे कल्याणप्रदे श्रीजयदेववचसि गीतरूपे हृदयं मनः सदयं दयायुक्तं तत्परं कुर्वित्यर्थः। कीदृशे वचसि हरिचरणस्मरणामृतेन निर्मितं कृतं कलिकलुषज्वरस्य कलिकृतपापरूपज्वरस्य खण्डनं नाशो येन ॥ ८ ॥

भा॰ टी॰—हे भक्तजन! अलंकाररूप, शुभदायक, भगवान्के चरणस्मरणरूप अमृतकरके कलियुगके पापोंका नाश करनेवाले, श्रीजयदेवकविके बचनविषे दयायुक्त मनको करो (लगावो) ॥ ८ ॥ इतिश्री गीतगोविंदस्यरसिकप्रियानामभाषाटीकायां चतुर्विंशतितमः प्रबंधः ॥ २४ ॥

श्लोकः ॥ रचय कुचयोःपत्रं चित्रं कुरुष्व कपोलयोर्घटय जघने कांचीमंच स्रजा कबरीभरम् ॥ कलय वलयश्रेणीं पाणौ पदे कुरु नूपुराविति निगदितः प्रीतः पीतांबरोपि तथा करोत्१॥

सं॰ टी॰—रचयेति। इति राधया निगादितः उक्तः प्रीतः संतुष्टः पीतांबरोपि तथाऽकरोत्। इति किं हे कृष्ण मम कुचयोः स्तनयोश्चित्रं चित्रविशेषं रचय। कपोलयोः पत्रं पत्रावलीं करेण रचय कुरुष्व जघने कांचीं क्षुद्रघंटिकां घटय अर्पय। स्रजा पुष्पमालया कबरीभारं केशपाशं अंच पूजय बन्धनं कुर्वित्यर्थः। हस्ते वलयश्रेणीं कंकणपंक्तिं स्थापय। पदे चरणयोः नूपुरौ कुरु स्थापय। गीतोक्तस्य संक्षेपार्थकथने न दोष उक्तः ॥ १ ॥

भा॰ टी॰—(हे प्रिय!) तुम कुचाओंपर चित्र बनाओ, कपोलोंपर पत्र बनावो, जांघस्थानपर तागड़ीको शोभित करो (अर्पण करो) केशबंधनको पुष्पोंसे पूजो, हाथोंमें कंगणोंकी पंक्तिको पहिनाओ, पैरोंमें (नूपर) बिछवे पहिनाओ इसप्रकारसे कहेहुए प्रसन्न भये श्रीकृष्णचंद्र भी तैसेही करते भये ॥ १ ॥

श्लोकः ॥ पर्यंकीकृतनागनायकफणाश्रेणीमणीनां गणे संक्रांतप्रतिबिंबसंकलनया बिभ्रद्वपुर्विक्रियाम् ॥ पादां-

भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः कायव्यूहमि
वाचरन्नुपचितापूतो हरिः पातु वः ॥ २ ॥

सं० टी०—पर्यंकीकृतेति । उपचितं समृद्धं आकूतं कामभावो यस्य स हरिः कृष्णः वः युष्मान् पातु । कीदृशो हरिः वपुर्विक्रियां देहविक्रियां शरीरपरामित्यर्थः बिभ्रद्धारयन् । किं कुर्वन् पर्यंकीकृतः शय्यास्थाने कृतो नागनायकः शेषस्तस्य फणाश्रेणी फणासमूहस्तस्य मणयस्तेषां गणे समूहे संक्रांतं संबद्धं तत्प्रतिकृतिस्तस्य संकलनया अन्वयेनास्थित इत्यर्थः कामव्यूहमिव बहुशरीरतामिवाचरन् कुर्वन् । किमिति कायव्यूह इत्यत आह । पुनः कीदृशः पादांभोरुहं श्रीकृष्णचरणकमलं धारयतीति धारिणी या वारिधिसुता लक्ष्मीस्तां अक्ष्णां शतैर्नेत्रसहस्रैर्दिदृक्षुः द्रष्टुमिच्छुः लक्ष्मीदर्शनं नेत्रद्वयेन तथा न संभवतीति कायव्यूहेन नेत्रबाहुल्यात् ॥ २ ॥

भा० टी०— शय्यास्थानपर कियेहुए शेषनागके फणोंकी पंक्तियोंके मणिगणमें परेहुए प्रतिबिंबोंकी ( अन्वय ) संबंधकरके ( स्थितहुए ) और शरीरभावको धारण करनेका आचरणसा करतेहुए शरीरके विकारोंको धारण करते हुए और ( अपने ) चरणकमलोंको धारण करतीहुई लक्ष्मीजीको आंखोंके हजारोंकरके देखनेकी इच्छावाले बढ़ेहुए कामभाववाले श्रीकृष्ण भगवान् तुम्हारी रक्षा करो ॥ २ ॥

श्लोकः ॥ यद्गांधर्वकलासु कौशलमनुध्यानं च यद्वैष्णवं यच्छृंगारविवेकतत्त्वरचनाकाव्येषु लीलायितम्॥
तत्सर्वं जयदेवपंडितकवेः कृष्णैकतानात्मनः सानंदा
परिशोधयंतु सुधियः श्रीगीतगोविंदतः ॥ ३ ॥

सं० टी०—यद्गांधर्वेति । यत् जयदेवकवेः गांधर्वकलासु विद्यासु कौशलं पटुत्वं प्रावीण्यमित्यर्थः । अस्तीत्यध्याहारः । यद्वैष्णवं विष्णोरनुध्यानमस्ति तथा शृंगाररसस्य यो विवेकः संभोगविप्रलंभादिरूपेण यद्विवेचनं तस्य तत्त्वं अर्थज्ञानं तत्तद्युक्तेषु काव्येषु रचनाया लीलायितं क्रीडाविलाससर्वस्वं । यद्वा लीलायितं शृंगारादिरसविभावनमास्ति तत्सर्वं जयदेवपंडितकवेः श्रीगीतगोविं-

दतः गीतगोविंदग्रंथात् सुधियः परिशोधयंतु विवेकिनः विचारयंतु सर्वतो भावेन शुद्धं कुर्वंत्वित्यर्थः । कीदृशस्य जयदेवपंडितकवेः कृष्णैकतानात्मनः कृष्णपरायणस्येत्यर्थः । जयदेवः पंडितः शास्त्राध्यापकः कविः काव्यकर्ता चेति जयदेवपंडितकवेः । श्रीशब्दस्तु ग्रंथांते मंगलार्थम् ॥ ३ ॥

भा० टी०—जो कछु गंधर्वकला ( गानविद्याओंमें ) प्रवीणता ( है ) ( जयदेवकी चतुराई है ) और जो विष्णुका अनुध्यान है, जो शृंगार विवेकके तत्वज्ञानयुक्त रचनावाले काव्योंमें क्रीड़ा, विलास, शृंगार रस आदिकी भावना है वेह संपूर्ण कृष्णचंद्रमें तत्पर हुए ( इस ) श्रीजयदेवपंडित कविके श्री गीतगोविंद ग्रंथसे आनंदयुक्त पंडितजन ( विचारलेओ ) सर्वभावसे शुद्ध करो ॥ ३ ॥

**श्लोकः॥श्रीभोजदेवप्रभवस्य राधादेवीसुतश्रीजयदेवकस्य ॥**
**पराशरादिप्रियवर्गकंठे श्रीगीतगोविंदकवित्वमस्तु ॥ ४ ॥**

सं० टी०—श्रीभोजदेवेति । पराशरादयः कविश्रेष्ठास्तेषां प्रियो वर्गो गोष्ठी तस्य कंठे गलदेशे अस्तु । तस्य श्रीगीतगोविंदकवित्वं भोजदेवप्रभवस्य भोजदेवोत्पन्नस्य तथा राधादेव्याः सुतस्येत्यनेन स्वपितृप्रतिपादनेन मंगलमाचरितं निजग्रंथे आशीरपि दत्तेति राधास्मरणात् आनंदयुक्तता द्योतिता ॥ ४ ॥

भा० टी०—श्रीभोजदेव नामक ( पिता ) से उत्पन्न हुए राधादेवीके पुत्र श्रीजयदेवकविका श्रीगीतगोविंद कवित्व ( कविता ) पराशर आदि कविजनोंके मित्र वर्गोंके कंठमें स्थित हो ॥ ४ ॥

**श्लोकः ॥ साध्वी माध्वीक चिंता न भवति भवतः शर्करे कर्कशासि द्राक्षे द्रक्ष्यंति के त्वाममृतमृतमसि क्षीर नीरं रसस्ते ॥ माकंद क्रंद कांताधर धरणितलं गच्छ यच्छंति भावं यावच्छृंगारसारस्वतमिह जयदेवस्य विष्वग्वचांसि ५**

सं० टी०—साध्वीति । विष्वक् सर्वतः यावच्छृंगारसारस्वतं भावं जयदेवस्य वचांसि यच्छंति तावत् हे माध्वीक मधो भवतस्तव मधुरमहामिति चिंता साध्वी न भवति । हे द्राक्षे त्वां के द्रक्ष्यंत्यास्वादयंति । अमृत मृतमसि हे क्षीर

नीरं रसस्ते । हे माकंद क्रंद आक्रोशं कुरु । किंच हे कांताधर त्वं पातालं गच्छ श्रीजयदेवकाव्यमधुराख्यभगवद्रसास्वादनिर्वृता जनास्तदेकनिष्ठाः संतः एतेषां तिरस्कारं करिष्यंतीति भावः ॥ ५ ॥

भा० टी०–हे मधु ( शहद ) सबतर्फसे जबतक यहां जयदेव कविके बचन शृंगारही है सार जिसमें ऐसे ज्ञानभावको देतेहैं तबतक तुम्हारी अभिलाषा अच्छी ( किसीको ) नहीं है. हे शंकरे ! ( खांड ) तुम किरकरी लगतीहो, हे दाख ! तुमको कौन देखेंगे, हे अमृत ! तुम मरगये हो, हे दुग्ध ! तुम्हारा रस जलकी समान है, हे आम्ररस ! तुम उच्चस्वरसे पुकारो,हे स्त्रीका अधरोष्ठ ! तुम पातालमें जावो, क्योंकि जयदेवकविकी कविताके रसके समान तुममें कोई नहीं है ॥ ५ ॥

लक्ष्मीदासतनूजेन भीषदासेन धीमता ॥ कारिता गीतगोविंदटीकेयं सुखदास्तु वः ॥ १ ॥ भीषदासनियुक्तेन कृष्णपत्यात्मसेविना ॥ नारायणेन सुकृतं गीतगोविंदटिप्पणम् ॥ २ ॥ टिप्पणे चेन्मदीये वै स्खलितं स्यात्प्रमादतः ॥ न कर्तव्यो ममाक्षेपो गंतुर्हि स्खलितं भवेत् ॥ ३ ॥

## इति श्रीकविराजश्रीजयदेवपंडितकृतौ गीतगोविंदे महाकाव्ये प्रीतपीतांबरो नाम सटीको द्वादशः सर्गः ॥ १२ ॥

इति श्रीगीतगोविंदे महाकाव्ये वेरीनिवासि गौडवंशावतंसद्विजशालग्रामात्मजबुधवस्तीरामशास्त्रिविरचितरसिकप्रियानामभाषाटीकायां द्वादशः सर्गः ॥ १२ ॥

वसुवेदाङ्कभूम्यब्दे १९४८ मधुकृष्णदले तथा ॥
गीतगोविंदटीकेयं चतुर्थ्यां पूर्णतामगात् ॥ १ ॥

# इति गीतगोविंदं काव्यं सटीकं

## समाप्तम् ।



# राधाविनोदकाव्यम्

## भाषाटीकासहितम् ।

श्रीगणेशाय नमः ॥ श्रीराधाकृष्णाभ्यां नमः ॥ पितृवचनमवश्यमेव पाल्यं जगति जनानिति शासितुं वनांतम् । गतमतिकरुणारसार्द्रचित्तं रघुपतिमेवमुपास्महे सदारम् ॥ १ ॥ राधाविनोदाख्यं काव्यं चिकिर्षुर्निर्विघ्नप्रारिप्सितसमाप्तिकामो रामचंद्रकविः परमेश्वरप्रार्थनारूपं मंगलमाचरति ।

श्लोकः ॥ मालीनो घनमालीमालीनो वनमाली ॥
मालीनो बलमाली मालीनोऽवतु माली ॥ १ ॥

सं०टी०—वनमाली वनमाला आपादलंबिनी माला तद्वान्विष्णुः । 'आपादलंबिनीं मालां वनमालां विदुर्बुधाः' इत्यभिधानात् । नोस्मान् ग्रंथकर्तॄन् श्रोतॄन्वा अवतु रक्षतु । कीदृशः मालीनः मा लक्ष्मीः । 'मा तु लक्ष्म्या च मायायां' इत्येकाक्षरः । लीना दर्पण इव हृदि लग्ना यस्य सः यद्वा मायां लीनो लोकपरंपरया कामाद्युत्पादनेन तदासक्त इत्यर्थः । एतादृशः । पुनः कीदृशः मालीनः मायां मायायां अलीनः निरंजननिराकारत्वात्तस्यामसक्तः पुनः की० मायां लक्ष्म्यां अलीनः सा तु लीना स तु नो सक्त इत्यर्थः । एकोदासीनत्वात् । पुनः किंभूतः मां शोभां अलंति व्रजंति ते मालयो यदुगोपादयस्तेषां इनः स्वामी 'इनः सूर्ये प्रभौ राज्ञि मृगांके क्षत्रिये नृपे' इति विश्वः । यद्वा मालंते शोभंते ते मालिनः इंद्रादयस्तेषां इनः स्वामी इश्वरेश्वर इत्यर्थः । मालीनः माला पुष्पस्रक् सा यस्य अस्तीति माली सुदामा तस्य इनः स्वामी दारिद्र्यभंजनत्वात् । यद्वा मे शिवे आलीनः तदभिन्नत्त्वात् । यद्वा मः वेधाः स एव अलिः कमलानुषंगित्वात् भृंगौपम्यं तस्य इनः 'मः शिवश्चंद्रमा वेधाः' इत्येकाक्षरः । पुनः कीदृशः घनमाली घनवत् श्याम इत्यर्थः । पुनः कीदृशः बल

माली वलभद्रेण मालतेसौ बलमाली परसामर्थ्यवान् । पुनः कीदृशः माली माला पुष्पस्रक् सा यस्यास्तीति माली पुष्पस्रग्वानित्यर्थः । यद्वा मा अलीति पदच्छेदः कर्तव्यः । कीदृशः अली अलति सर्वं प्राप्नोतीति अली परमात्मरूपेण सर्वांतर्यामी विश्वव्यापीत्यर्थः । अथ वा दशावतारवर्णनमारभते " वनजौ वनजौ खर्वस्त्रिरामी सकृपोकृपः । अवतारा दशैवैते कृष्णस्तु भगवान् स्वयम् " वनमाली वने जले मालते शोभत इति वनमाली ' वने सलिलकानने ' इत्यमरः मत्स्यरूपी विष्णुः नोऽवतु । कीदृशः बलमाली बलेन शंखासुरोन्मूलनकरणेन बलेन मालतेसौ । पुनः वनमाली कूर्मरूपी विष्णुः नोस्मानवतु । कीदृशः बलमाली सकलभूभारेण निष्पंदफणामंडलानंतोद्वहनकरणेन बलेन मालतेसौ । पु० ब० वनेऽरण्ये मालतेऽसौ वराहरूपी विष्णुः नोवतु । की० ब० सागरनिमग्नमहीमंडलोद्धरणकरणेन मालते । पुनः वनमाली नृसिंहरूपी विष्णुः नोवतु । की० ब० हिरण्यकशिपुसमुच्छेदकरणेन बलेन मालतेसौ । पुनः अघनमाली अ इव रुद्र इव घनं यथा तथा मालत इति अघनमाली यद्वा अघनं ह्रस्वं माली वामनरूपी विष्णुः नोवतु । की० ब० बलेन बलिच्छलनकरणेन मालतेसौ । पुनः वनमाली रुद्धस्वर्यानत्वात्तिर्थार्थं वने परिभ्रमन् जामदग्न्यरूपी विष्णुर्नोवतु । की० ब० सकलक्षत्रियोत्पाटनकरणेन बलेन मालतेसौ । पुनः वनमाली दंडकारण्यदेशे रामरूपी विष्णुर्नोवतु । की० घनमाली घनवत् श्यामः । पुनः की० ब० पौलस्त्याद्युच्छेदकरणेन बलेन मालतेसौ । की० ब० बलरामेति स रामपदेन मालतेसौ । बलभद्ररूपो विष्णुः नोवतु । कीदृशः बलमाली कालिंदीकर्षणेन बलेन मालतेसौ । पु० की० घनमाली शरदंबुदगौरः । पुनः अवनमाली अवनेन रक्षणेन मालतेसौ बुद्धरूपी विष्णुः नोवतु । की० ब० प्राण्यहिंसादिकरणेन बलेन मालतेसौ । पुनः की० बलेन म्लेच्छोच्छेदनकरणेन मालतेसौ कल्किरूपी विष्णुः नोवतु । अथ संमोहनकाममंत्रोद्धारणपक्षमाह । संमोहनकाममंत्रमयरूपो हरिः नोवतु । मंत्रमयत्वं विशिनष्टि मालीनः मा शक्तिः सामान्यस्वरास्तेषु आलीनः ककारः तद्गतत्वेनैवोच्चार्यमाणत्वात् । प्रथमत्यागे

कारणभावादिति न्यायेन ककारो ग्राह्यः । तथा च ककारात्मक इत्यर्थः । घनमाली घनेन मा यस्य सः घनमः इंद्रः तस्य इदं बीजं घनमं तल्लातीति घनमाली तथा च लकारात्मक इत्यर्थः । मालीनः मायाः इदं तस्मिन् ईकारे आलीनः । पुनः मालीनः मश्चंद्रः आलीनोऽस्मिन् असौ । तदुक्तं शारदातिलके 'ब्रह्मा भूम्यां समासीनः शांतिबिंदुविभूषितः । बीजं मनोभुवः प्रोक्तं जगत्रितयमोहनम्' ॥ १ ॥

भा० टी०–वॅंनमाली अर्थात् उत्तम पैरोंतक लटकती हुई मालावाले लक्ष्मीविषे लग्न होरहे (आसक्तहो रहे) हुए, मॅंलीन अर्थात् मायाविषे अलीन हैं संसक्त नहीं ऐसे मॅंलीन अर्थात् शोभाको प्राप्त होनेवाले यादव आदिकोंके स्वामी, मॅंलीन अर्थात् मालावाले जो सुदामाजी तिनके स्वामी घॅंनमाली अर्थात् घनवत् (मेघवत्) श्याम सुंदर बॅंलमाली अर्थात् बलभद्रके संग शोभित होनेवाले, मॅंाली अर्थात् पुष्पोंकी मालावाले ऐसे, विष्णु भगवान् हॅंमारी रक्षॅंाकरो ॥ १ ॥

**विधुसुहृद्विरहानलपीडिता विधुसुहृत्तरलानिलपीडिता ॥**
**विधुसुहृद्वदनालिमपीडिता विधुसुहृत्सुगिरोऽकिरदीडिताः ॥२॥**

सं० टी०–विधुसुहादिति । विधुसुहृत् विधुः विष्णुः सुहृत् प्रियो यस्याः सा राधिका । "विधुश्चंद्रमासि विष्णौ विधुः कर्पूरकामयोः" रिति विश्वः । आलिं सखीं प्रति ईडिताः स्तुताः सुगिरः अकिरत् उवाचेत्यर्थः । कीदृशी विधुसुहृद्विरहानलपीडिता विधुः विष्णुः स एव सुहृत्प्रियस्तस्य विरहो वियोगः स एव अनलः वह्निस्तेन पीडिता । पुनः कीदृशी विधुसुहृत्तरला विधुश्चंद्रस्तस्य सुहृन्मन्मथस्तेन तरला चंचला । 'चंचलं तरलं चैव पारिप्लवपरिप्लवे' इत्यमरः यद्वा विधुः कर्पूरः तस्य सुहृत् समस्तरलो हारमध्यमणिर्यस्याः सा 'तरलः स्यान्मध्यगो मणिः' इति शाश्वतः । कामज्वराग्निस्तेजस्कमुक्ताइत्यर्थः । पुनः कीदृशी अनिलपीडिता अनिलो मलयानिलः तेन पीडिता । पुनः कीदृशी विधुसुहृद्वदना विधोश्चंद्रस्य सुहृत्समं तुल्यं वदनं यस्याः सा विरहसमयत्वात् चंद्रसाम्यं स्फुटमेव । यद्वा कर्पूरपांडुरवदना । पुनः कीदृशी ईडिता स्तुत्या

अपि ईडिता इति पदच्छेदः कर्तव्यः । यद्वा अपीडिता एन कृष्णेन पीडिता अपीडिता कृष्णविरहपीडितेत्यर्थः ॥ २ ॥

भा० टी०–प्रियं विष्णुके विरहरूप अग्निसे पीडित होरही है ऐसी, चंद्रमाके मित्र कामदेवसे चंचल होरही हुई, चंदनयुक्त सुगंधित वायुसे पीड़ित होरही हुई, चंद्रमाका मित्र अर्थात् चंद्रतुल्य मुखवाली, ( अपीईडिता ) स्तुतिकरने योग्य अथवा अपीडिता विष्णु भगवानके विरहसे पीडित, विष्णु हैं प्रिय जिसके ऐसी राधाजी सखीके प्रति स्तुतिके सुंदर वचनोंको कहती भई ॥ २ ॥

श्लोकः ॥ उदयते दयते दयते शशी सखि करैरकरै-
स्तिमिराकरैः ॥ दिशमिमां चर मां च रमारमं कमल-
कोमललोललोचनम् ॥ ३ ॥

सं० टी०–उदयइति । हे सखि शशी चंद्रः उदयते च परं करैः इमां हस्ते वर्तमानां दिशं दयते प्राप्नोति कृपयतीत्यर्थः । कृपयितृत्वे हेतुमाह कीदृशैः करैः तिमिराकरैः तिमिरस्य अकरैः अकर्तृकैः । यद्वा तिमिरं आसमंतात्किरंति हिंसंतीति तिमिराकरैः तद्गतध्वांतनाशकैरित्यर्थः । च परं करैः मां दयते पीडयतीत्यर्थः । दयदानगतिहिंसादर्शनेषु भौवादिकः । पीडनत्वमाह कीदृशैः करैः अकरैः अकं दुःखं रांति ददतीति दुःखदैरित्यर्थः । यद्वा कं जलं रांति स्वीकुर्वंतीति कराः न भवंतीति अकरास्तैरुष्णैरित्यर्थः अतस्त्वं रमारमं लक्ष्मीकांतं प्रति चर गच्छ सः रमासक्तोऽस्ति अतः स नागमिष्यति । कीदृशं रमारमं कमलकोमललोललोचनं लुल्यते तल्लोलं लोलं लोलत्वं लातः ते लोलले कमलं सरोजमिव श्रृंगीवास इव कोमले मनोहरे लोलले चंचले लोचने यस्य तम् । यद्वा कीदृशः शशी अंकमलकः अंकः कलंकः स एव मलो यस्मिन् तदंकमलं कं मूर्धा यस्य सः । एतत्पक्षे कीदृशं रमारमं लक्ष्म्या क्रीडंतं यद्वा चरमां दिशं अंत्यामवस्थां दयते प्रापयति । पुनः कीदृशं रमारमं लक्ष्मीरमं यद्वा शशी कमलः के सुखे कमलकः दुःखद इत्यर्थः ॥ ३ ॥

भा० टी०–हे सखि ! चंद्रमा उदय होता है और अंधकारको नष्ट करनेवाले, अक

अर्थात् दुःखको देनेवाले किरणोंकरके इस दिशाको प्राप्त होता है और मुझको पीडा करता है ( इसलिये तुम ) कमलकी तरह कोमल और चंचल नेत्रोंवाले, रमारम अर्थात् श्रीकृष्णके पास जावो ॥ ३ ॥

**श्लोकः ॥ कुमुदबंधुरबंधुरबंधुरः स तनुतेऽतनुतेततनुते ततः ॥**
**हिमकरोऽहिमतां हि मतामतां किमनु मा सदृशं सदृशं विधोः ॥ ४ ॥**

सं० टी०—कुमुदबंधुरिति । हे सखी हिमकरः चंद्रः मा अनूद्दिश्य अहिमतां उष्णतां तनुते विस्तारयति हि यत् तत् विधोः सदृशं कुलपरंपरागतं विरहिणीपीडनं उचितं किं । कीदृशं मां मतामतां मान्यां । पुनः कीदृशीं मां सदृशं सज्ञानां । 'दृक् ज्ञाने ज्ञातरि त्रिष्वि' त्यमरः । कीदृशः हिमकरः अबंधुरः अपां अंधुःकूपः तं राति प्राप्नोतीत्यबंधुरः शीतलः 'पुंस्येवांधुः प्रहिः कूप' इत्यमरः । पुनः कीदृशः कुमुदबंधुरबंधुः कुमदानां बंधुरः प्रियो बंधुरित्यर्थः । पुनः कीदृशः अतनुतेतनुतेततः अतनुता महत्वं तदितः प्राप्तः अत एव नुतां स्तोतृत्वं इतः स एव इति ततः यद्वा अ इति पदच्छेदः हिमकरः शीतहस्तः अः विष्णुः मां अनूद्दिश्य विधोः चंद्रमसः सदृशं समानां अहिमतां उष्णतां परितापं तनोति कीं० अः कौ पृथ्व्यां मुत् हर्षो येषां ते कुमुदां जलानां अबंधवः राक्षसादयः तान् राति गृण्हाति इति कुमुदबंधुरः दुष्टहंता सचासौ बंधुरबंधुः शिष्टसुहृदित्यर्थः ॥ ४ ॥

भा० टी०—हे सखि! चंद्रमा, मान्यहू ( और ) सदृश अर्थात् ज्ञानवाली ऐसी मेरा उद्देश करके उष्णता बढ़ाता है; जिससे सो योग्यही है, कि चंद्रमाको विरही जनको दुःख देना परंपरागत ही है. और यह चंद्रमा, अबंधुर अर्थात् शीतल है और कुमोदिनियोंका प्रिय बंधु है ( और ) महत्व भावको प्राप्त होरहा है ततः अर्थात् इसी कारणसे वही स्तुत्य है सब स्तुति करते है ॥ ४ ॥

पुनः प्रकारांतरेण चंद्रं निंदति—

**श्लोकः ॥ कमलिनीमलिनीमलिनाऽलिनीविचलता च लतासु लताशुभाम् ॥ विधुतभां विधुता विधुभानुभिर्नयनयोर्नयनयोनयसीनयोः ॥ ५ ॥**

सं० टी०—कमलिनीति । हे अलि त्वं इमां कमलिनीं ईनयोर्दीर्घयोः अनयोःनयनयोः नानयसि नापास्यसि । कीदृशीं मलिना लतासु विचलतालिना विधुतां त्यक्तां । पुनः की० लताशुभां लताश्रेष्ठां । पु० चंद्ररश्मिभिर्विधुतभां त्यक्तकांतिं यथा केनचित्पुंसा करस्पष्टां कांचित्प्रोषितभर्तृकां त्यजति । यद्वा मली कृष्णः गोपीविहारत्वादित्यर्थः । मलिना कृष्णेन विधुतां त्यक्तां लताशुभां गोपीश्रेष्ठां तनुत्वाल्लतासाम्यं विधुभानुभिः विधुतभां दुःखीकृतां मां पश्यासि अतःकृष्णानयनाय गच्छेत्यर्थः ॥ ५ ॥

भा० टी०—हे अलि ! सखि ! ललिताओंमें विचरते हुए मलिन भ्रमरसे त्यागी हुई और लताओंमें उत्तम, चंद्रमाकी किरणोंकरके हीनकांतिवाली ( ऐसी ) ( इस ) कमलिनीको ( अपने ) दीर्घ इन नेत्रोंसे दूर नहीं करती है क्या ? अर्थात् दिनमेंही कमलिनी खिलती है अब रात्रीमें जारिणीकी तरँह अन्य पुरुषरूप चंद्रमासे स्पर्श की गइ है इसलिये इसको मत देखो ॥ ५ ॥

पुनः भंग्यंतरेण चंद्रं निंदाति—

श्लोकः ॥ सखि विभाति विभाऽतिविभाविभा न
सरसी सरसारससारसैः ॥ अलिकुलैर्विधुनावि
धुतां धुता विनमदब्जमुखी विमुखी स्थिता ॥ ६ ॥

सं० टी०—सखीति । हे सखि विधुनेंदुना विधुता मुकुलितपंकेरुहा कृता अत एव अलिकुलैः शिलीमुखवृंदैः सरसारससारसैः सरसं सविलासमारसंति शब्दं कुर्वंति ते सरसारसाः सारसाः तैश्च तैश्च धुता त्यक्ता अत एव अति विभा विभिः पक्षिभिः यत्कांतिः तस्या अतिक्रांता अत एव विभा गतकांतिः अविभा कृष्णकांतसदृशी विनमदब्जमुखी विनमंति अब्जमुखानि यस्याः सा अत एव विमुखी पराङ्मुखी स्थिता सरसी न विभाति । एतादृशीं दृष्ट्वा दुःखातिशयं प्राप्नोति अतः कृष्णमानयेत्यर्थः ॥ ६ ॥

भा० टी०—हे सखि ! चंद्रमाकरके मूंदेहुए पुष्पोंवाली, भ्रमरकुलोंकरके और विलाससहित शब्द करनेवाले सारस पक्षियोंकरके त्यागीहुई, पक्षियोंकी कांतिको उलंघके वर्त्तती हुई, कृष्णसरीखी कालीकांतिवाली, मूंदेहुए कमलोंसे मुखवाली, ( इसीलिये )

विमुख होके स्थितहुई ( यह ) सरसी अर्थात् तड़ागी नहीं प्रकाशित होती है ( ऐसी इसके देखनेसे अत्यंत दुःखही प्राप्त होता है ) ॥ ६ ॥

पुनः भंग्यंतरेण चंद्रं निंदति–

श्लोकः ॥ कुमुदिनीदयितो दयितोनता निजक-
रैरकरैर्दहति स्फुटम् ॥ यदयमेकपदेविपदेऽभव
द्विकचपुष्करिणीहरिणीदृशः ॥ ७ ॥

सं० टी०—कुमुदिनीति । हे सखि कुमुदिनीदयितः चंद्रः अकरैः अकं दुःखं रांति ददति ते अकरास्तैर्दुःखदैरित्यर्थः । निजकरैः स्वकिरणैः दयितोनतां दयितेन भर्त्रा ऊनतां स्वामिशून्यां विरहिणीमित्यर्थः । स्फुटं अत्यर्थं यथा तथा दहति तापयति पीडयतीत्यर्थः । अथ दृष्टांतमाह कुतः यतो यतः कारणात् अयं चंद्रः विकचपुष्करिणी प्रफुल्लपद्मिनी सैव हरिणीदृक् कांता तस्याः विपदे विपत्तये एकपदे तत्क्षणे क्षणमात्रं अभवज्जातः ॥ ७ ॥

भा० टी०—हे सखि कुमोदिनियोंका प्रिय ( चंद्रमा ) दुःखको करनेवाली अपनी किरणोंकरके प्रियसे रहितहुई इस तड़ागीको प्रकटही संताप करता हैं क्योंकि जो यह चन्द्र प्रफुल्लितहुई कमलिनीरूप स्त्रीको विपत्ति करनेकेवास्ते क्षणमें ( उद्यत ) होताभया ॥ ७ ॥

श्लोकः ॥ विधुरिता धुरि ता धुरिता दहन् विधुरयं
जनितो जनितोऽकभृत् ॥ इह तदक्षिगते क्षिगतेऽ
ब्जिनी रविमतिर्विमतिर्निमिमील सा ॥ ८ ॥

सं० टी०—विधुरिति । धुरि प्रथमतः विधुरिताः विरहिण्यः ताः प्रसिद्धा वनिता दहन् तापयन् अयं विधुः विध्यति विरहिणमिति विधुः चन्द्रः जानितः जन्मतः अंकभृत् जानितः जातः संभूतः 'न हन्याद्विपदं प्राप्तं कातरं वा प्रतिक्षत' मिति भावः । कीदृशाः धुरिताः धुरं मुख्यत्वं इताः प्राप्ताः । अतः दृष्टांतमाह कुतः यतः हेतोः क्षिगते क्षिं क्षीणत्वं गतः क्षिगतः तस्मिन् । नामैकदेशग्रहणे नामग्रहणमिति न्यायात् क्षीणत्वं गत इत्यर्थः । इह चन्द्रमासि अक्षिगते सति दृक्प्राप्ते सति रविमतिः सूर्यसक्ता विमतिः विवृद्धबुद्धिः चन्द्रम

सीति भावः । अब्जिनी पद्मिनी निमिमील मुकुलिताबभूव । सकलंकिनि दृष्टे सति नेत्रोन्मीलने रविदर्शनं कुर्यादिति भावः ॥ ८ ॥

भा० टी०–हे सखि ! प्रथमही तिन विरहिनी स्त्रियोंको मुख्यत्व भावको प्राप्तभइयोंको संताप करताहुआ यह चंद्रमा जन्मसेही कलंकवाला भया हैं इसीलिये क्षीणताको प्राप्त-हुए पर इसचंद्रमाको नेत्रगोचर होनेपर सूर्यमें सक्तहुई बढ़ीहुई बुद्धि ( चंद्रमामें लगी तब ) वह कमलिनी मूंदगईहै अर्थात् कलंकवाले चंद्रमाके दर्शन होनेपर आंख मींचके सूर्यका दर्शन करती है ॥ ८ ॥

श्लोकः ॥ मलयपन्नगपन्नगमंडलीकवलितो वलितो नु वनानिलः ॥ अदयमंगमदंगमदंगकं दहति यद्भ्रमयन्भ्रमयन्नयम् ॥ ९ ॥

सं० टी०–मलयपन्नगेति । हे आलि वलितः आगतः वनानिलः वनवायुः मलयस्य पद्मः प्रांतपर्वताः “ पादाःप्रत्यंतपर्वता” इत्यमरः । तेषु नगाः वृक्षाः तेषु पन्नगाःसर्पाः तेषां मंडली आलिः तया कवलितः पीतः नु वितर्के “ नु पृच्छायां वितर्केचे ” त्यमरः । कुतः अंग अलि हे आलि ‘ अथ संबोधनार्थकाः । स्यु प्याट् पाडंग हे है भो’ रित्यमरः । यत् यतः कारणात् भ्रमयन् भ्रांतिं कारयन् अंगमत् अंगानि मथ्नातीति अंगमदंगमथकः अयं वायुः भ्रमयत् भ्रमं प्राप्तं मदं-गकं ह्रस्वशरीरं सयौवनामित्यर्थः । अदयं दयारहितं यथा तथा दहति ताप-यति । अन्यथा कथं पीडयतीत्यर्थः ॥ ९ ॥

भा० टी०–हे सखि ! आयीहुई वनकी वायु मलयाचलके समीपस्थ पर्वतोंके वृक्षोंमें रहनेवाले सर्पोंकी मंडलीकरके ग्रसित होरही है मैं ऐसी तर्कना करती हूं ( और ) हे आलि! जिसही कारणसे भ्रमाताहुआ ( और ) अंगको मथनेवाला यह वायु भ्रमको प्राप्तभये मेरे अंगको दयारहित पूर्वक संताप देरहा है ॥ ९ ॥

श्लोकः ॥ अयि रसालवनी नवनी रनीरनवनी नवनीपवनीवती ॥ अलिकुलालिकुलाऽलिकु-लाकुला प्रति हिमामहिमामहिमाहिमा ॥ १० ॥

सं० टी०–अयीति । नवनी नवीनत्वं प्राप्ता । नवा नूतना ये नीपाः कदं-बास्तेषां वनी वनं तद्वती सकिसलयकदंबयुक्ता इत्यर्थः । अतएवानवनी अ-

रक्षका मत्पीडनतत्परा इत्यर्थः । अलिकुलालिकुला अलीनां कुः स्थानं अभ्रमित्यर्थः तं लांति स्वीकुर्वंति ते कोकिलास्तेषां अलिस्तस्याः कुलं गृहं यस्यां कोकिलासक्तेत्यर्थः । 'कुलं कुले गणे गेहे देहे जनपदेपिचे' त्यभिधानम् । अलिकुलाकुला अलिवृन्दासक्ता अतएवाहिमा अहेः सर्पस्य मा इव मा यस्याः सर्पवत् भयानका व्यथका चेत्यर्थः । हिमा शीतला रसालवनी सहकारवनं स्वार्थे ङीप् । अहिमां उष्णां तद्विरहवर्ती मां प्रति रनीः रः अग्निः तन्नयाति सा अस्ति हि अनलतापजननीत्यर्थः ॥ १० ॥

भा० टी०—अयि हे सखि ! नवीनभावको प्राप्तभई नूतन कदंबोंकी बनीवाली और मुझको पीडा करनेमें तत्परहुई ( और ) भ्रमरोंके स्थानको देनेवाले आकाशमें ठहरनेवाले ( कोकिला ) कोयलपक्षीनकी पंक्तियोंको स्थिति देनेवाली और तिन कोयलोंके समूहसे युक्तहुई सर्पकी तरंह भयानक हुई ( यह ) शीतल आम्रवृक्षोंकी बनी विरहके संतापवालीके मेरे प्रति अग्निको देनेवाली है ॥ १० ॥

श्लोकः ॥ बकुलमाकुलमालि परागितं मधुपरागपरागपरालिभिः ॥ विशदशारदशारदशारदं शशकलं ककलंककलंकितम् ॥ ११ ॥

सं० टी०—बकुलमिति । हे आलि तद्बकुलं बकुलपुष्पं दृश्यते । की० परागितं संजातकिंजल्कं । पुनः कीदृशं मधुपरागान् पिबंति ते मधुपरागपा अत एव रागपराः स्नेहगायनपरास्ते च ते अलयश्च तैराकुलं व्याप्तं । पुनः कीदृशं विगतं शं सुखं यस्याः सा विशा असुखा सा दशा येषां ते विशदशा विरहिणीजनास्तान् आरदति पीडयति तत्तच्च शं अराति सा शारा दशावस्था येषां ते स्वयासुखं भुंजानास्तेषां अ आत्यंतं रंअनलं तापं द्यति खण्डयति एवंविधं वियोगिनामसुखदं सुखप्राप्तानां तापखण्डनमित्यर्थः पुनः कीदृशं शशकलंककलं शशकलंकश्चन्द्रः तस्य कलाकांतिरिव कांतिर्यस्य तच्चंद्रसदृक्षं व्यापकमितिभावः । पुनः कीदृशं ककलंकितं केनवायुना कलंकितं कंपितम् ॥ ११ ॥

भा० टी०–हे आलि! बकुलपुष्प, ( आंवल, इति गुर्जरदेशे पुष्प; ) ऐसा दीखताहै कि, केशरोंवाला है और मधु ( पुष्परस ) को पीनेवाले स्नेह गायनमें तत्पर हुए भ्रमरोंकरके व्याप्त होरहा है ( और ) सुखरहित दशावाले विरहीजनोंको पीड़ा करनेवाला और स्त्रीसुख भोगनेवालोंके संतापको दूर करनेवाला है चंद्रमाँकी कांतिसरिखा सफेद कांतिवाला है और कर्कलंकित अर्थात् वायुसे कंपित है ॥ ११ ॥

श्लोकः ॥ नवमशोकमशोकमशोकदे सुरभितारभिता-
लिरतारतम् ॥ सखि समाश्रय माश्रयमाश्रयः कम-
लिनीमलिनीप इवाऽऽगतः ॥ १२ ॥

सं० टी०–नवमशोकमिति । हे अशोकदे शोकं द्यति सा शोकदा न शोकदा अशोकदा तस्याः संबोधने हे अशोकदे हे अदुःखदे त्वं नवं अशोकं अशोकनामानं वृक्षं आश्रय । की० अशोकं शोकरहितं पु० की० सुरभितारभितालिरतारतं सुरभितया सुगंधितया रभिता अनन्यशोभाः संजाताः पुष्परागरंजिता इत्यर्थः । ते च ते अलयश्च तेषां रतं रतिसुखं तस्मिन्नारतं आश्रितं भ्रमराणां सुखमस्ति अतस्ते दुःखं हरिष्यंतीत्यर्थः । पु० की० माश्रयं मायाः शोभायाः आश्रयं स्थानं अतो हे सखि सः माश्रयः लक्ष्मीपतिः आगत एवेति अवेहि । क इव यथा अलिनीपः भ्रमरिणीपतिः कमलिनीं प्रति आगच्छति तथा हरिर्लक्ष्मीं मुक्त्वा त्वां प्रत्यागत एवेतिजानीहीत्यर्थः ॥ १२ ॥

भा०टी०–हे अशोकदे शोकको खंडन करनेवाली ! तुम शोकको दूर करनेवाले कैसा अशोक वृक्ष है कि सुगंधितासे पुष्परागसे अनन्य शोभावाले हुए भ्रमरोंको रमणका सुख देनेवाला, शोभाका स्थान, नवीन अशोक नामवाले वृक्षके आश्रय करो. हे सखि ! ( इसलिये ) ऐसा मालूम होता है कि, भ्रमरीका पति ( भौंरा ) कमलिनी पर आयेहुए-की तरह आश्रय अर्थात् लक्ष्मीपति श्रीकृष्णभी लक्ष्मीको त्यागके तुम्हारे प्रति आगये हैं ॥ १२ ॥

श्लोकः ॥ सखि हिताऽसिमतासि मतात्थ मां नवमशो
कमशोकमशोकदाम् ॥ तदिहमामवमामव मामम्
व्रज हरिं नवनीरदनीरदम् ॥ १३ ॥

सं० टी०—सखीति । हे सखि त्वं हिता पूर्वं प्रिया अधुना त्वं असिमता असेरिव मतं अभिप्रायो यस्याः असिवत्पीडाकर्त्रीत्यर्थः । मतासि मान्यासि । कुतः यतः त्वं मां नवं अशोकं आत्थ ब्रूषे किं० अशोकदां अस्य विष्णोः शोको यस्मादसौ तं तद्दर्शनादधिकदुःखद मित्यर्थः । की० मां अशोकदां अस्य विष्णोः शोकं दुःखं ददातीत्यात्मना अशोकदा तां तत्तस्मात्त्वं हरिं ब्रज गच्छ मां अव दुःखतः रक्ष । की० मां अमां अशोभां विष्णुविरहेण कर्शितां । की० इह ईं कामं जि हिते प्राप्नोति इह सकामुकमित्यर्थः। यमकत्वादनुस्वारच्युतालंकारः पु० की० मामवं मा लक्ष्मीर्मो ब्रह्मा तौ वाति गच्छति इति मामवं लक्ष्मीब्रह्माभ्यामपि सेवितमित्यर्थः। पुनः कीदृशं नवनीरदनीरदं नवो नूतनो यो नीरदःमेघः तस्यनीः नितरां ईः या शोभा तां रदति प्राप्नोति नवांबुदश्याममित्यर्थः ॥१३॥

भा० टी०—हे सखि ! पहले हितहुई तुम अब, खड्गकी तरंह अभिप्रायवाली होरही हो और मान्य हो (क्योंकि जो) अपने मनसे विष्णुके शोकको दूर करनेवाली मेरेप्रति विष्णुको शोक करनेवाले नवीन अशोकको कहती हो तिसलिये विष्णुके पास जाओ शोभारहितहुईकी मेरी रक्षाकरो (कैसे श्रीकृष्ण हैं) कि कामबाधा युक्त, लक्ष्मी और ब्रह्मासेभी सेवित, (और) नवीन मेघके समान श्याम सुंदर हैं ॥ १३ ॥

श्लोकः ॥ इति सखी गदिताऽगदिताऽदिता नवनराय वराय
वराय वा ॥ इति गिरं कलया कलया कला पटु गिरा मृ
दुताऽमृदुतादुता ॥ १४ ॥

सं० टी०—इतीति । कलानाम्नी सखी कलया गंभीरया गिरा अनवनराय नवोनरः नवनरः न नवनरः अनवनरः तस्मै पुराणपुरुषाय इति वक्ष्यमाणां गिरं यत्पटु यथा तथा अदित ददाति स्म । की० गिरा कं सुखं लाति ददाति सा कला तया प्रियोपेतत्वे सुखकारिण्येत्यर्थः पुनः की० मृदुता मार्दवं अमृदुता कठोरत्वं ताभ्यां दुनोतीति दुत् तया । की० कला तया इति गदिता उक्ता पु० की० अगदिता वा शब्द इवार्थे स्वचातुर्यादनुक्तेन कीदृशाय वरायवराय वरः अयो यस्य वरायः स चासौ वरश्च शुभावहविधिमते श्रेष्ठाय च ॥ १४ ॥

भा० टी०—केला नामवाली ( राधाजीकी ) सखी मधुर वाणीसे पुराणपुरुष श्रीकृष्णके अर्थ ऐसे इस बचनको चतुराईपूर्वक कहती भई ( कलैया ) अर्थात् सुखदेनेवाली बाणीसे कहा ( फिर ) मृदुतामृदुताढ्ता अर्थात् कोमलता और कठोरतासे कहीहुई करके कैसी सखी है कि, ऐसे प्रकारसे कहीहुई है परंतु भौंनों कछु नहीं कहागया है ऐसी है कैसे श्रीकृष्णके कि ( वरायवराय ) शुभदायक विधिमान श्रेष्ठ है तिनके अर्थ कहती भई॥१४

**श्लोकः ॥ मलयजं तनुतेऽतनु ते तनौ सहचरी न-**
**लिनी नलिनीदलम् ॥ सुनयनाऽनलदं नलदं च सा**
**तदपि सीदति सीदति बंधुता ॥ १५ ॥**

सं० टी०—मलयजमिति । हे कृष्ण ते सहचरी सखी तनौ अतनु भूरि मलयजं मलयाचलसंबंधि चंदनं तनुते विस्तारयति लेपनं करोतीत्यर्थः । पुनः ते नलिनी कमलिनी ते प्रिया तनुत्वात् पद्मिनीसाम्यं तनौ अतनु बहुलं नलिनीदलं तनुते । पुनः ते सुनयना दीर्घलोचना अनलदं तापनाशकं नलदं उशीरं तनौ तनुते तदपि सा सीदति दुःखं प्राप्नोति । अपरं बंधुता अस्मदादि सखिता सीदति परितापयति नश्यति वेत्यर्थः ॥ १५ ॥

भा० टी०—हे श्रीकृष्ण ! आपकी सहचरी सखी ( राधा ) शरीरपर बहुतसे चंदनको लगाती है ( फिर ) पद्मिनी तुम्हारीप्रिया कमलपत्रको ( बहुत धारण करती है ) ( दीर्घनेत्रोंवाली प्रिया ) तापनाशक खशको धारण करती है तबभी वह दुःख पाती है और ( हम सब उसकी ) सखी सुहेलियांभी दुःख पाती हैं ॥ १५ ॥

**श्लोकः ॥ समुदिते मुदितेमुदितेक्षणे हिमकरे मकरेनकरे श्रुती**
**पिकरवेऽवरवेवरवे ति सा हरिणलांछनलांछनलांछना ॥ १६ ॥**

सं० टी०—सुमुदिते इति । ईश्वर लक्ष्मीपते अमुदिता मुद्रहिता सा ते प्रिया ईक्षणे अमुदिते मुद्रहिते मुकुलिते करोति संकोचयतीत्यर्थः । कस्मिन्साति हिमकरे चंद्रे समुदिते सति उदयति साति । की० मकरेनकरे मकराणां मत्स्यानां इनः प्रभुः समुद्रस्तस्य कं रातीति करः सुखदः तास्मिन् सर्वस्यापि सुखकरे तस्यास्तु दुःखद इत्यर्थः । च पुनः श्रुती कर्णौ अमुदिते करोति आच्छादयतीत्यर्थः । कस्मिन् साति पिकरवे कोकिलाकूजिते समुदिते साति । कीदृशी अवरवा अवेति शब्दं कुर्वाणा । पुनः कीदृशी वेत्यर्द्धाक्षरेणायि इति उक्ता हरि-

णलांछनश्चंद्रः स एव लांछनं चिन्हं यस्य सः शिवः सलांछनं चिन्हं यस्याः सा शिवशिवेति जपतीत्यर्थः ॥ १६ ॥

भा० टी०—हे लक्ष्मीपते ! वह तुम्हारी प्रिया समुद्रको सुख देनेवाले चंद्रमाके उदय होनेपर आनंद रहित हुई नेत्रोंको मींचती है ( और ) कोयलपक्षियोंके शब्द होनेपर कांनोंको ढाकती है अंब अर्थात् रक्षा करो ऐसे कहनेवाली तथा अयि, ऐसे कहके शिवे ! शिव ! जपती है ॥ १६ ॥

**श्लोकः ॥ न सहते सहते सह ते सखी तव वियोग वियोगमयोगहृत ॥ सपदि तां तरुणीं सरणिं मणिं किरतु नाम नवं नवनीविजम् ॥ १७ ॥**

सं० टी०—नसहत इति । हे अयोगहृत् अयः लोहत्वं गच्छति तत् हृत् हृदयं यस्य हे कठिणहृदय वियोग गरुडारूढ हे सह हे शांत ते सखी प्रिया तव वियोगं न सहते सहते इति दुःखित्वाद्वीप्सार्थत्वं । अतः सपदि तामधुना मनसि वर्तमानां तरुणीं किरतु त्यजतु सरणिं किरतु सरणिं प्रियाकुंजमार्गं राधावनमार्गं किरतु गच्छतु 'सरणिः पद्धतिः पद्ये' त्यमरः । च परं नवं नूतनं नवनीविजं वसनग्रंथिस्थं मणिं किरतु क्षिपतु नाम निश्चयेन ॥ १७॥

भा० टी०—हे लोहसरीखे कठोर हृदयवाले ! हे गरुडारूढ ! हे शांतस्वरूप ! आपकी सखी राधा तुम्हारे वियोगको नहीं सहती है ? इसलिये शीघ्रही तिसै ( मनमें वर्त्तती हुई- तरुणीको त्यागो और राधाके कुंज मार्गको चलो वस्त्रकी ग्रंथिमें स्थितहुई नवीन मणिको निश्चय त्यागो ॥ १७ ॥

**श्लोकः ॥ अथ तया कलया कलया शुभां वनजदामजदामजदीप्तिमान् ॥ हरिरगात्तमगात्तमगात्त्वं सा मुदमतीवमतीव दृशोः स्थितम् ॥ १८ ॥**

सं० टी०—अथतयेति । हरिः तया कलया सह शुभां राधिकां अगात् । कीदृश्या कलया कं सुखं लाति प्राप्नोतीति हृष्टचित्तया । कीदृशो हरिः वनजानि कमलानि तेषां दाम समूहः तस्माज्जातं दाम माला तस्यां जाता या कांतिः सा विद्यते यस्य तथोक्तः । सा प्रिया तं वीक्ष्य अतीव मुदं अगात्

प्राप । आगतं विष्णुं आलोक्य हृष्टाभूदित्यर्थः । कीदृशं अगात्तं अगः गोवर्धनः अत्तो येन तम् । पुनः कीदृशं अतीवं अनुद्धतः पुनः कीदृशं दृशोः स्थितम् ॥ १८ ॥

भा० टी०—इससे अनंतर कमलपुष्पोंके समूहकी मालाकी कांतिवाले श्रीकृष्ण भगवान् प्रसन्नचित्तवाली तिसै कलानामक सखीके संग ( शुभा ) राधाजीको प्राप्त होतेभये फिरै वह राधा गोवर्द्धनको स्वातंत्र्यकरनेवाले तिसै श्रीकृष्णको अत्यंत प्रसन्न भयेको नेत्रोंके आगे स्थितहुएको ( देखके ) अत्यंत हर्षको प्राप्त होतीभई ॥ १८ ॥

श्लोकः ॥ रामचंद्रकविना कविनाऽदः पूरुषोत्तम सुतेनसुतेन ॥ राधिकाहृदयशोकदमासीद्राधिकाहृदयशोकदमासीत् ॥ १९ ॥

सं० टी०—रामचंद्रेति । अदः राधिकाहृदयशोकदं राधिकायाः हृदयं तस्य शोकः तं द्यति खंडयति तत् काव्यं रामचंद्रकविना कृत्वा आसीत् रामचंद्रेण कृतमभूदित्यर्थः । कीदृशेन कविना कः ब्रह्मा उः शिवः अः वायुः अः अग्निः अः सूर्यः ते विद्यंते आराधनीयत्वेन यस्य तेन । पुनः कीदृशेन पूरुषोत्तमः द्विजः तस्य सुतः जनार्दनः तस्य ईनेन ज्येष्ठेन सुतेन राधिका च हृदयशोकदा राधिकाहृदयशोकदुःखनाशिकाकला मश्चंद्रश्च अः विष्णुः अः वायुश्च अस्याति विरहिणमिति असः मधुश्चंद्रः कामश्च तेषां इत् प्रापकं वर्णनियत्वेन तत् राधिकाहृदयशोकदमासीत् ॥ १९ ॥

इति श्रीपुरुषोत्तमात्मजजनार्दननंदनरामचंद्रकविकृतं राधाविनोदाख्यंकाव्यं सटीकं समाप्तं ॥ शुभंभवतु ॥

भा० टी०—राधारूप दुःखनाशक कला, चंद्रमा, विष्णु, वायु, मधु, काम, इन्होंकी प्राप्ति करानेवाला यह राधिकाके हृदयके शोकको खंडन करनेवाला ( काव्य ) ( कविना ) ब्रह्मा, शिव, विष्णु, वायु, अग्नि, सूर्य इनका आराधन करनेवाले पुरुषोत्तमके पुत्र जनार्दन तिसके ज्येष्ठपुत्र रामचंद्रकविसे कियाहुआ है ॥ १९ ॥

इति जिलारोहतकग्रामबेरीनिवासिद्विजशालग्रामात्मजपंडितवस्तीरामशास्त्रिकृत भाषाटीका समाप्ता ॥

श्रीगणेशाय नमः ॥ अथषट्पदीस्तोत्रप्रारंभः ॥ अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम् ॥ भूतदयां विस्तारय तारय संसारसागरतः ॥ १ ॥ दिव्यधुनीमकरंदे परिमलपरिभोगसच्चिदानंदे ॥ श्रीपतिपदारविंदे भवभयखेदच्छिदे वंदे ॥ २ ॥ सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वं ॥ सामुद्रो हि तरंगः क्व च न समुद्रो न तारंगः ॥ ३ ॥ उद्धृतनग नगभिदनुज दनुजकुलामित्र मित्रशशिदृष्टे ॥ दृष्टे भवति प्रभवति न भवति किं भवतिरस्कारः ॥ ४ ॥ मत्स्यादिभिरवतारैरवता रवताऽवता वसुधाम् ॥ परमेश्वर परिपाल्यो भवता भवतापभीतोऽहम् ॥ ५ ॥ दामोदरगुणमंदिर सुंदरवदनारविंद गोविंद ॥ भवजलधिमथनमंदर परमं दरमपनय त्वं मे ॥ ६ ॥ नारायण करुणामय शरणं करवाणि तावकौ चरणौ ॥ इति षट्पदी मदीये वदनसरोजे सदा वसतु ॥ ७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छंकराचार्यविरचितं

श्रीविष्णोःषट्पदीस्तोत्रं संपूर्णम् ॥

हरिप्रसाद भगीरथजीका.

पुस्तकालय--कालकादेवीरोड, मुंबई.

## अकबर बीरबर वाणीविलास.

बीरबरके चित्र व चरित्रसहित.

इसमें उस अकबर बीरबरकी नर्मकोविदता और वाक्‌चातुर्यका परम रमणीय प्रस्ताव है. कि जिसके गूढतर मानव मनोहर प्रश्नोत्तर वाचकको लोकोत्तर आनन्द देनेवाले हैं. लेखक रघुवंश शर्माके करकमलकलित ललित लेखका दृश्यभी अवश्य द्रष्टव्य है. अकबर बीरबरकी कर्णमधुर बचनरचनाके पुस्तक अन्यत्रभी छपे हैं. परंतु इतना विस्तार और ऐसा उत्तम प्रकार किसी पुस्तकमें नहीं है. इसमें प्रश्नोत्तरोंकी संख्या तीनसौके लगभग है. पुस्तक अपूर्व और संग्रह करने योग्य है. मूल्य केवल १। रु. सेही ग्राहकोंके पास पहुँचा दिया जायगा.

## भैषज्यसारसंग्रह

अर्थात्

परीक्षित और सुलभ औषधियोंका संग्रह.

इसे श्रीमन्महाराजाधिराज महाराजा श्री १०८ श्रीशार्दूलसिंहजी बहादुर जी. सी. आई. ई. कृष्णगढाधिपतिके प्रधान मन्त्री रावबहादुर श्यामसुन्दरलालजी साहब बी. ए. के. आश्रित धन्नालाल ज्यूडिशियल सेक्रेटरी महाकमें श्रीदरबार राजकिशनगढने सर्व जनहितार्थ संग्रह कर छपाया है. इसमें ग्रन्थकर्ताने यावत् रोगोंपर अनेक ग्रंथोंसे निदानपुरस्सर अमोघ एव सर्वथा स्वानुभूत प्रयोग उद्धृतकर ऊर्ध्वभागमें मूल तथा अधोभागमें भाषाटीका लिखकर आयुर्वेदविषयक बड़ी भारी आवश्यकताको पूर्ण किया है. पुस्तक आकारमें छोटी होनेपरभी बडे कामकी है. मू. ६ आना, डा. म. २ आना.

## आल्हा–कंसवध.

महाशयो ! वीरपुरुषोंको आल्हादित करनेवाले आल्हा छन्दके प्रभावको कौन नहीं जानता, कि जिसके सुननेसे कायरभी शूरताके जोशमें आकर भुजदण्डोंको उकसाता हुआ मूछोंको मरोडने लगता है. इसी वीरमनोरंजक छन्दमें हमने कंसवधका उल्था कराया है. कि जो आल्हाका आल्हा और भगवद्गुणानुवाद अर्थात् " एक पंथ दो काज " आल्हारसिकोंको इसका संग्रह अवश्य करना चाहिये. मू. ४ आना. डा. म. १ आना.

## साहित्यमंजरी.

यहभी भाषासाहित्यका एक अपूर्व संग्रह है. इसमें कवित्त सवैया आदि छन्दोंमें षट्ऋतुवर्णन आदि अनेक अतीव समीचीन विषय हैं. अथच संगीतविषयक वर्णन नितान्त उत्तम एवं रसिक जनमनोमोहक है, मूल्य ६ आना. डा. म. १ आना.

## आनन्दवृन्दावनचम्पू.

सटीक.

यह ग्रन्थ वंगदेशीय कविकुलाग्रगण्य " श्रीकविकर्णपूर " गोस्वामीजिकी असाधारण कवित्वशक्ति और अप्रतिम प्रतिभारूप कल्पवल्लीका रसमय फल है, इसमें श्रीमद्भागवतदशमस्कन्धके आधारपर नन्दोत्सवसे लेकर रासपर्यंत आनन्दकन्द श्रीकृष्णचन्द्रजीकी अभिनव सुखमय लीलाओंका निरूपण विस्तारपूर्वक नितान्त हृद्य गद्यपद्योंमें किया गया है. इसके अतिरिक्त होलोत्सव तथा दोलोत्सवप्रभृति अन्यान्य विविध प्रसंगोंका यथावसर सविस्तर वर्णन है. इसका और भागवतटीकाप्रणेता " श्रीविश्वनाथ चक्रवर्तीकी " टी-

काका संयोगभी मणिकांचनयोगवत् परम रमणीय है. क्योंकि इसपर यदि उक्त चक्रवर्तिजीकी टीका न होती तो इसके यमकमय गद्यपद्योंका यथार्थ अर्थ समझना इदानींतन पण्डितोंको अतीव कठिन होता. किंबहुना संस्कृत साहित्यमें यह चम्पू अपने ढंगका एकही है. मू. रु.४ चार डा. म. ८ आना.

## श्रीमहालक्ष्मीपंचांग.

इसमें लक्ष्मीपटल, लक्ष्मीनित्यपूजापद्धति, लक्ष्मीकवच, लक्ष्म्यष्टोत्तरसहस्रनामस्तोत्र, लक्ष्मीस्तोत्र, यह पांच विषय मुख्य हैं, और तन्त्रोक्तलक्ष्मीकवच, सिद्धिलक्ष्मीस्तोत्र तथा अनुपम वागीश्वरीस्तोत्रभी ग्रंथान्तमें संग्रथित है. यह ग्रंथ दुष्प्राप्य होनेके कारण आजतक कहीं मुद्रित नहीं हुआ था, परंतु कई प्राचीन हस्तलिखित पुस्तकालयोंमें अन्वेषण करनेपर सर्व साधारणके सौभाग्यसे हमको प्राप्त हुआ, अतएव इससे सर्व साधारणका उपकार और पुस्तकका जीर्णोद्धार तथा भली प्रकार प्रचार होनेके विचारसे मुद्रण कर कई हजार प्रतियोंका आविष्कार किया है, यदि आप लोगोंको लक्ष्मीजीके प्रसन्न करनेकी इच्छा हो तो इसे मँगाकर प्रयोग कीजिये, मूल्य ६ आ डा. १ आ.